# YAJÑA TATTVA PRAKĀŚA

BY
MAHAMAHOPADHYAYA, SASTRARATNAKARA, MIMAMSAKESARI,
PANDITA SARVABHAUMA
PANDIT A. CHINNASWAMI SASTRI
*Lecturer in Sanskrit, Calcutta University*

EDITED BY
PANDIT A. M. RAMANATHA DIKSHITA, M.A.,
SAHITYACHARYA, SAHITYASIROMANI, VEDACHARYA, VEDATIRTHA,
MIMAMSASASTRI, VEDANTASASTRI
*Sanskrit Mahavidyalaya, Banaras Hindu University*



1953



Bound Cover Rs. 4.
Ordy. Cover Rs. 3.

॥ श्रीः ॥

॥ ओं नमश्शिवाभ्याम् ॥
॥ ओं नमस्सरस्वत्यै ॥

# यज्ञतत्त्वप्रकाशः


महामहोपाध्याय, शास्त्ररत्नाकर, पण्डितसार्वभौम, मीमांसाकेसरि,
श्रीचिन्नस्वामिशास्त्रिमहोदयैः वेदविशारदैः
श्रीकलिकाताविश्वविद्यालये संस्कृताध्यापकपदमधितिष्ठद्भिः
विरचितः

वेदाचार्यः, साहित्याचार्यः, साहित्यशिरोमणिः, वेदतीर्थः,
वेदान्तशास्त्री, मीमांसाशास्त्री, M.A., इत्याद्युपाधिधारिणा
काशीहिन्दूविश्वविद्यालयीयसंस्कृतमहाविद्यालये
वेदसाहित्यमीमांसाध्यापकेन
पं. रामनाथदीक्षितेन
सम्पादितः





मद्रास् ला जर्नल् प्रेस्

२०१० वैक्रमाब्दः, शकाब्दः १८७५
ई. १९५३

TO

Dr. SARVEPALLI RADHAKRISHNAN

WITH

AFFECTIONATE REGARDS

विद्वद्वृन्दसमर्हणीयनिजवाङ्माधुर्यसन्तर्पित-
क्षोणीमण्डलमण्डिताय विदुषामग्र्यं पदं बिभ्रते ।
नीत्या दैत्यगुरुं धिया च धिषणं न्यक्कुर्वते योगिने
राधाकृष्णमहार्हते कृतिमिमां श्रद्धागरिम्णाऽर्पये ॥

अ. चिन्नस्वामिशास्त्री.

## 'YAJÑATATTVAPRAKĀŚA'

BY

MM. SRI CHINNASWAMI SASTRI, *of Calcutta University.*

Parts I-III.

I have been struck with wonder and admiration by the work of Mahāmahopādhyāya Chinnaswāmi Śāstrī. It deals with Vedic sacrifices, the order of rituals, the mode of performance of the different acts, the function of the priests, the vessels and utensils required and the construction and structure of the Vedis (altars) etc. In fact it is an exhaustive account of the Vedic religious ceremonies—a subject which is little known and much less understood by modern scholars. I do not know how many scholars are competent to do justice to the subject. But my esteemed friend and colleague Mahāmahopādhyāya Chinnaswāmi Śāstrī is the very scholar who possesses the full equipment for this task. His perfect mastery of the Vedas-Saṁhitā and Brāhmaṇas-and Upaniṣads in their entire gamut, his astounding knowledge of Mīmāṁsā and Śrauta-sūtras and the different systems of Indian philosophy together with his unparalleled command of a simple, elegant and forceful style place him in a unique position. I consider it a singular good fortune that Calcutta University has been able to enlist his services as a Professor, who by his towering personality, majestic erudition, and perfect urbanity and above all by his capacity for elucidation of abstruse problems in plain language, has been a source of inspiration and an object of admiration, reverence and love. I for my part feel inspired and confident of the future of our culture when I find him by my side. He is unique in his scholarship and in his humility. He is an example of what India's Culture can achieve.

When I was a student I was puzzled by the introductory observations of Sāyaṇa regarding the application of the *mantras.* The terminology and technicalities of Vedic ritualism were entirely unintelligible. The Professors and students were in the same predicament. We read the articles and papers written by European and Indian scholars and at the end of tremendous labour came to have a hazy, inchoate and blurred picture of it in our mind. It has become a fashion with the

average student of our universities to omit this portion of Vedic exegesis. But this is a very unsatisfactory state of affairs. The Veda is studied as a language or as literature. But this method of study must be not only imperfect but misleading also. It seems to be analogous to post-mortem examination of physiological phenomena. One cannot have a knowledge of the living organism by studying the dead tissues. The soul of the Vedic hymns and Brāhmaṇas is sacrifice and with this the modern scholar has no acquaintance. The consequence has been ignorance and misunderstanding which combined with pride have engendered an irreverent spirit. In one word, the result of our Vedic study has been an unrealistic vanity. Philological researches have made good progress, but this is a consequential byproduct and can never be a substitute of true knowledge.

I have read some chapters of this work and I must confess that I stand enlightened to a considerable extent. I am looking forward to a time when I shall devote myself to the study of this illuminating work. The treatment is so lucid and graphic that one can have a fair and comprehensive knowledge of the tangled subject. I am anxious that this work should be published without avoidable loss of time. I am sure that the work will be hailed both in Europe and India. The study of this work will equip the reader with the necessary intellectual apparatus to understand the Vedas and the bhāṣyas. My preoccupation with other matters compels me to stop short with this brief and inadequate expression of my appreciation. I am also not sure of my competency to adjudge the work in all its bearings. But this much can be stated without exaggeration and fear of contradiction that this work will go a long way in reviving the interest in and preservation of Vedic tradition.

*Calcutta University.*
13—7—51

SATKARI MOOKERJEE,
*Asutosh Professor and*
*Head of the Dept. of Sanskrit,*

॥ श्रीः ॥

# प्राक्कथनम्

भगवतः परमेशितुः भगवत्या देव्याः सर्वमङ्गलायाश्च असीमया कृपया यज्ञतत्त्वप्रकाशाख्योऽयं ग्रन्थः पूर्णतामगात् । कलिकाताविश्वविद्यालयेऽत्र संस्कृतविभागे तत्तद्विभागानुसारेण अध्येयत्वेन निर्णीतानां केषाञ्चन याज्ञिकपदार्थानां स्वरूपविवेचने इदन्तया ग्रन्थस्य कस्यचिद्-निर्देशात् तन्मूलकम् अध्येतृभिः अनुभूयमानं क्लेशविशेषं परिहर्तुकामस्य मम ग्रन्थस्यास्य विलेखने प्रवृत्तिरुदभूत् । तत्र यज्ञस्वरूपविधिविवरणादौ यजुर्वेद एव प्राधान्यमावहतीति सुविदितमेव । विषयेऽत्र सतीष्वपि यजुर्वेदान्तर्गतास्वेव बह्वीषु शाखासु तैत्तिरीयशाखैव तत्स्वरूपनिरूपणे सामर्थ्यं बिभर्ति । इयमेव तैत्तिरीयशाखा तद्वेदीयशाखान्तरापेक्षया प्राचीनतमा च । एतदनन्तरमेव तद्वेदीया अन्याः शाखाः प्रवृत्ताः । सत्यवसरे साध्विदं विस्तरशो निरूप्येत । अतः अत्र निरूपितानां सर्वेषां क्रतूनां यथावत् स्वरूपविवेचनाय प्राधान्येन सैव शाखा आश्रयणीया अभवत् । तदनु-सारिणी आपस्तम्बीयं श्रौतसूत्रं बौधायनीयं च विशेषतया आश्रयणीये अभूताम् । अतः प्राधान्येन ग्रन्थाविमाववलम्ब्य अन्यांश्च तत्तद्वेदीयान् श्रौतसूत्रग्रन्थान्, पद्धतीश्च तास्ता यथायोगं परिशील्य, ग्रन्थोऽयं लिखितः । प्राचीनकालेषु वेदाः तदनुसर्पिणः श्रौतसूत्रग्रन्थाश्च भारतीयानामस्माकं निधयः श्रेयोमार्गप्रदर्शकाश्च आसन् । तदुदितान्येव च कर्माणि उच्चावचानि यथावदनुष्ठाय आस्माकीनाः पूर्वतनाः पुरुषाः पारलौकिकीमैहलौकिकीं च सुखसमृद्धिं लभमाना आसन्निति तैस्तैरैतिहासिकैः ग्रन्थरत्नैः अवगच्छामो वयम् ॥

कालेन च वैदिके मार्गेऽस्मिन् दुरवबोधतया बहुकृच्छ्रसाध्यतया च शनैः शनैः शिथिलतामुपगते विद्यान्तरेषु गाढतरमवगाहमाना अपि विषय-मिममुपेक्षन्ते स्म ज्ञातारोऽपि । तेनैव च हेतुना उपेक्षाविषयतां प्राप्तोऽयं श्रौतो विषय इदानीं क्रमशः कियतीं दुरवस्थामनुभवतीति न वर्णनीयं विवेचनशीलानाम् । अतः आस्माकीनेयं चिरन्तनी रत्नप्रभा यथा न आत्यन्तिकं लोपमियात् तथा अस्माभिर्यतितव्यम् । अत एव च मयाप्यत्र किञ्चिदिव यतितम् ॥

एतादृशे समये कलिकाताविश्वविद्यालयः—यः भारतीयप्राचीनसभ्यतापरिरक्षणे प्राथम्यमावहति—विषयमिमम् अध्येयकोटौ निवेशयतीति स सर्वथा श्लाघनीय इत्यत्र नास्ति विशयलेशोऽपि । विषयस्वरूपमात्रनिरूपणप्रवणेन मया तत्तच्छ्रौतसूत्रस्वरूपनिर्देशादिकं न कृतम् । साधारण्येन परं तत्तत्स्थलनिर्देशः कृतः अधष्टिप्पण्यां तत्र तत्र । अध्येतॄणाम् उपकारमेव विशेषतो मनसिकृत्य तदनुसारेणैव ग्रन्थोऽयमारचित इति तु विज्ञा विजानीयुरेवेति नात्र अधिकं वक्तुमुत्सहे । अतो विद्वद्वराः विशेषेण च विद्यार्थिनः ग्रन्थमिमं यथावदुपयुज्य प्रयत्नं मदीयं सफलयेयुरिति सुदृढं विश्वसिमि ॥

स्थलेषु बहुषु समुत्पन्नान् संशयान् दूरीकृत्य पदार्थयाथार्थ्यं तदा तदा विवेचितवतां श्रौतविद्यायां भारतदेशे इदानीं प्रथमगणनीयानां त्रिश्रौतभास्करादिविविधोपाधिविभूषितानां नल्लिच्चेरि - श्रीरामनाथश्रौतिमहोदयानां शतश उपकारान् प्रशंसामि कृतज्ञतापूर्वकम् ॥

अमूल्यमतिगभीरमात्मीयमाशयमेतद्ग्रन्थविषयकमाविष्कृत्य ग्रन्थमिमं पाठकानां पुरः कृतवद्भ्यः कलिकाताविश्वविद्यालये संस्कृतविभागीयप्रधानाध्यापकपदं (Asutosh Professor) अलङ्कुर्वद्भ्यः विद्वत्कुलमूर्धाभिषिक्तेभ्यः श्रीसातकरीमुख्योपाध्यायमहोदयेभ्यो बहुशो धन्यवादान् हार्दिकान् वितरामि ॥

इति
विदुषां वशंवदः
अ. चिन्नस्वामिशास्त्री

कलिकाता
१५-७-'५१

# ॥ विषयसूची ॥

## प्रथमभागे

## तृतीयभागे



## वेदीनां चित्राणि

॥ श्रीः ॥

॥ श्रीगणेशाय नमः ॥

# ॥ यज्ञतत्त्वप्रकाशः ॥

## महामहोपाध्यायश्रीचिन्नस्वामिशास्त्रिविरचितः
## अग्न्याधेयादिचातुर्मास्यान्तहविर्यज्ञनिरूपणरूपः

॥ प्रथमो भागः ॥

चञ्चच्चन्द्रकलानिरन्तरवहत्पीयूषधारोक्षितो
गङ्गोत्तुङ्गतरङ्गभङ्गनिवहक्लिद्यत्कपर्दोज्ज्वलः ।
कल्याणैकनिधिर्जगत्यसुमतां तापत्रयोन्मूलनं
कुर्वञ्छ्रेय इहादधातु जगतां क्षेमङ्करश्शङ्करः ॥ १ ॥

जगत्स्थित्युद्भवलया यत्प्रसादादनेकधा ।
तं नौमि परमात्मनं यज्ञेशं यज्ञरूपिणम् ॥ २ ॥

यज्ञानां प्रक्रिया ह्येषा ह्रसिमानमुपागता ।
उद्धर्तुमेनां यत्नोऽयं प्रीणन्तु सुधियोऽमुना ॥ ३ ॥

### अग्न्याधेयम्

एवं तावत् सर्वेषां श्रौतकर्मणाम् उत्पत्तिविकासादिनिरूपणद्वारा सामान्यस्वरूपं निरूपितं किञ्चित् सामान्यकाण्डे । इदमिदानीं विशेषतस्तेषामेव विविच्य अवगमनाय प्रयत्यते । तत्र तावद्वेदोदितानि सर्वाण्यपि श्रौतकर्माणि कृतदारेण आहिताग्निना अनुष्ठेयानीति शास्त्रसिद्धान्तः । आहिताग्निस्तु विधिवत् श्रुतिविहितमाधानं योऽनुतिष्ठति स एव भवति । अतस्तदेव पूर्वं निरूप्यते ॥

आधानं त्रिविधम्—होमपूर्वाधानम्, इष्टिपूर्वाधानम्, सोमपूर्वाधानं चेति । तत्र, अग्निहोत्रारम्भं करिष्यन् ततः पूर्वं यदाधानं करोति

तद्धोमपूर्वाधानम् । दर्शपूर्णमासेष्ट्यारम्भात् पूर्वं क्रियमाणमिष्टिपूर्वाधानम् । सोमयागारम्भात् पूर्वमनुष्ठीयमानं सोमपूर्वाधानम् । तदित्थम्—

यियक्षमाणः पुरुषो वसन्ततौ[क] (कस्मिंश्चित् यथोदितनक्षत्रादियुते) काले यथावदग्नीनाधाय साङ्गस्य आधानस्य परिसमाप्तिदिन एव सायमग्निहोत्रमारभेत । तद्दिनप्रभृति प्रतिदिनं सायं प्रातश्च अग्निहोत्रं जुह्वदासीत । तदिदं होमपूर्वाधानम्[ख] ॥

आधानानुष्ठानानन्तरं श्रौतं किमपि कर्म अकृत्वा शुक्रास्तादिदोषादूषिते पर्वणि (पौर्णमास्यां) पूर्णमासेष्टिं, तदनन्तरदर्शे दर्शेष्टिं चानुतिष्ठति यदि तदा तत् इष्टिपूर्वाधानमित्युच्यते । अस्मिन् पक्षे कालं सामग्रीसम्पदं च अवाप्य सोमादीननुतिष्ठेद्यागान् । अथ वा वसन्ते कस्मिंश्चिद्दिने शुभे आधानं कृत्वा तत्समनन्तरदिन एव सोमयागाय यदि सङ्कल्पयेत् तत् सोमपूर्वाधानम् । पक्षेऽस्मिन् सोमयागं परिसमाप्य तस्मिन्नेव दिने सायमग्निहोत्रमारभेत । अनन्तरपूर्णिमायां पूर्णमासेष्टिमित्यादि । त्रयाणाममीषां पक्षाणां स्वेच्छया विकल्पः परिग्रहणे । सङ्कल्पे परमेषां वैलक्षण्यम्, न त्वनुष्ठाने ॥

तत्र यदहरग्नीनाधास्यमानः स्यात् तत्पूर्वदिने कृतपापानुगुणप्रायश्चित्तो निष्कल्मषीभूय,[ग] आभ्युदयिकश्राद्धादिकमनुष्ठाय सपत्नीको यजमानो गृहीतनियमो वर्तेत । श्वोभूते कृतनित्यक्रियो भार्यया सह आधानार्थं सङ्कल्पं कुर्यात् । आधानस्य फलमग्नीनां गार्हपत्य-आहवनीय-दक्षिणाग्नीनां त्रयाणां, सभ्य-आवसथ्यसहितानां पञ्चानां वा सिद्धिरेव । अतः आधानं न कस्यचित् कर्मणोऽङ्गभूतम्, किं तु स्वतन्त्रमेव कर्म ॥

---

क. आधानस्य ब्राह्मणकर्तृकस्य वसन्ततुरेव कालो विहितः श्रुतौ— " वसन्ते ब्राह्मणोऽग्नीनादधीत " इति ॥

ख. होमः अग्निहोत्रहोमः । ततः पूर्वमेव क्रियमाणमाधानं होमपूर्वाधानम् । अतश्च आधानानन्तरमेव अग्निहोत्रारम्भे होमपूर्वाधानम् । आधानानन्तरमेव दर्शपूर्णमासेष्ट्यारम्भे इष्टिपूर्वाधानम् । आधानानन्तरमेव सोमयागसङ्कल्पे सोमपूर्वाधानमिति सिद्धम् ॥

ग. मङ्गलकार्येषु क्रियमाणं श्राद्धम् आभ्युदयिकमित्युच्यते । अभ्युदयसम्बन्धि आभ्युदयिकमिति ॥

तत्र आदौ आधानार्थं यजमानेन सङ्कल्पं कृत्वा ऋत्विग्वरणे कृते, अध्वर्युः शमीवृक्षस्योपरि यः प्ररूढोऽश्वत्थवृक्षः तस्मादेकां छित्त्वा शाखां, तां द्विधा कृत्वा, अरणिद्वयं ताभ्यामेव सम्पाद्य, अरणी ते युगपदेव आधानदेशं प्रत्याहरेत्[1] । पूर्वसम्पादिते वा ते तत्र आहरेत् । ते च चतुरङ्गुलोन्नते द्वादशाङ्गुलविस्तीर्णे षोडशाङ्गुलायते अनातपशुष्के भवतो बौधायनमतात्[2] । चतुर्विंशत्यङ्गुले इति कात्यायनपक्षः । तयोरेका अधरारणिः; अपरोत्तरारणिरित्युच्यते ॥

ततः सप्त पार्थिवाः सम्भारा आहवनीयादिषु कुण्डेषु क्षेपणाय आनीय स्थापनीयाः । ते यथा— १. सिकताः २. ऊषाः[क] ३. आखुकरीषम् ४. वल्मीकवपा ५. सूदः ६. वराहविहतम् ७. शर्कराः ८. हिरण्यम् । एवं वार्क्षाः (वृक्षसम्बन्धिनः) अपि सम्भाराः सप्त । ते च यथा— १. अश्वत्थकाष्ठम् २. उदुम्बरकाष्ठम् ३. पलाशकाष्ठम् ४. शमीकाष्ठम् ५. विकङ्कतकाष्ठम् ६. अशनिहतवृक्षशकलम् ७. पद्मपत्रम् । एवमेतान् पार्थिवान् वानस्पत्यांश्च सम्भारान् तस्मात् तस्मात् स्थानात् वृक्षाच्च आहृत्य, एकस्मिन् पात्रे प्रज्ञातान् तान्निदध्यात् ॥

तत आहवनीयाद्यग्नीनां गृहनिर्माणम् । तत्र गार्हपत्यस्य वेदेः पश्चिमतः पृथक् गृहम् । आहवनीयाग्नेः पृथक् । तयोरन्यतरस्मिन् दक्षिणाग्नेः स्थानम् । आहवनीयाग्नेः पुरतः सभ्याग्नेः । तस्य पुरतः आवसथ्यस्य[ख] ॥

ततो यजमानो नापितेन क्षुरकर्म कारयित्वा नखकर्तनादि च, स्नात्वा क्षौमे वस्त्रे (दुकूलद्वयं) परिदध्यात् । एवं यजमानपत्न्यपि क्षौरं

---

क. ऊषरभूमिगता मृत् ऊषा । मूषिकोत्कीर्णा मृत् आखुकरीषम् । वल्मीकस्योपरिभागे स्थिता मृत् वल्मीकवपा । अशोष्यस्य जलाशयस्य मृत् सूदः । वराहेण स्वमुखोत्कीर्णा मृत् वराहविहतम् । क्षुद्रपाषाणाः शर्कराः 'शुक्कान्कल्' इति द्राविडभाषायाम् । एवं एते वस्तुविशेषाः सम्भारा इत्युच्यन्ते ॥

ख. इदानींतनास्तु याज्ञिकाः स्थानाभावाद्यसौकर्येण एकस्मिन्नेव अपवरके त्रयाणां पञ्चानां वा अग्नीनां कुण्डान् निर्माय तत्र तान् स्थापयन्ति ॥

---

१. *See.* आप. श्रौ. ५. १. २.

२. *See.* बौ. श्रौ. २. ६.

विना नखनिकृन्तनादिकं परं कारयित्वा स्नात्वा क्षौममेव वस्त्रं परिदधीत। ततोऽध्वर्युरपराह्णे यजमानस्यौपासनाग्नेरर्धं पृथक्कृत्य, तं गार्हपत्याग्नेः स्थाने निधाय, प्रज्वाल्य [क]ब्रह्मौदनपाकार्थं तण्डुलान्निरुप्य[ख] व्रैहेयान्, तानप्रक्षाल्यैव चतुश्शराव[ग]परिमितान् जलपूर्णे महति पात्रे प्रक्षिप्य पचेत्। यथा भक्तेषु तण्डुलांशोऽल्पोऽवशिष्येत तथा पक्तव्यम्। ततः पक्वमन्नमुद्वास्य[घ] ततो दर्व्या गृहीत्वा तस्मिन्नेवाग्नौ जुहुयात्[1]। ततोऽवशिष्टमोदनं चतुर्धा विभज्य पिण्डं कृत्वा चतुर्भ्यः ऋत्विग्भ्योऽध्वर्य्वादिभ्यो (अध्वर्यु–होतृ–ब्रह्म–आग्नीध्रेभ्यः) दद्यात्। पात्रे च किञ्चिदवशेषयेत्॥

ततोऽध्वर्युः स्वीयं भागं सव्यहस्ते दक्षिणहस्तेन पात्रस्थेऽन्ने आज्यं प्रस्राव्य, तदन्नं तिसृभिः फलवतीभिः अश्वत्थसमिद्भिरालोड्य, आलोडनसमये लग्नेनाऽन्नेन साकमेव ताः समिधः तस्मिन्नेवाऽग्नौ निदध्यात्[2]। तत ऋत्विजो ब्राह्मणाः स्वस्वान्नं भुञ्जीरन्। इदं च समिदाधानं यस्मिन्नहनि अग्ने आधानं चिकीर्षति तत एकस्मात् वत्सरात् पूर्वं, द्वादशाहात् त्र्यहात् त्र्यहात् पूर्वं वा, पूर्वस्मिन्नेव वा दिने कर्तव्यम्। ततो यजमानस्तस्यां रात्रौ व्रतग्रहणं (नियमस्वीकारं) कृत्वा वीणावेणुवादनादिभिः जागरणं[3] कुर्यात्। तमग्निमिन्धनादिप्रक्षेपेण सर्वां रात्रिं प्रज्वाल्य रक्षेत्। ततः प्रातरुषःकाल एव तस्मिन्नग्नावरणी पूर्वसम्भृते प्रतप्य, तमग्निं शमयित्वा, यजमानहस्तेऽरणी प्रयच्छेत्। यजमानस्ते प्रतिगृह्य, अभिमन्त्र्य यावन्मथनारम्भं स्वहस्त एव धारयन्नासीत। ततः अध्वर्युर्गार्हपत्यायतनस्योद्धननावोक्षणादि कृत्वा, पूर्वस्थापिताः सिकता गृहीत्वा ताः समशो द्वेधा विभज्य, एकमर्धं पुनर्द्वेधा विभज्य, एकं भागं गार्हपत्यायतने, एकं च दक्षिणाग्न्यायतने

क. ब्राह्मणानामृत्विजां भोजनाय यः पक्व ओदनः स ब्रह्मौदनः॥

ख. प्रभूतमानीतेभ्यस्तण्डुलेभ्यः प्रकृतापेक्षितांस्तण्डुलान् पृथक् गृहीत्वा तेषां पात्रान्तरे स्थापनम्॥

ग. शरावः 'तस्तरी' इति हिन्दीभाषायाम्॥

घ. अग्नेर्बहिर्निस्सार्य स्थापनमुद्वासनम्।

१–२. *See* आप. श्रौ. ५. ५. ८–११.

३. *See* आप. श्रौ. ५. ८. २–५.

४. ,, ,, ५. ९. ४. ५.

प्रक्षिपेत् । अवशिष्टमर्धं त्रेधा विभज्य, आहवनीय-सभ्य-आवसथ्यायतनेषु प्रक्षिपेत् । केचित् सभ्य-आवसथ्यौ न आदधते । अस्मिन् पक्षे तस्यार्धस्य आहवनीय एव निवपनं कार्यम् ॥

## गार्हपत्याधानम्

अनेनैव प्रकारेणेतरानपि पार्थिवान् सम्भारान् विभज्य, तेषु तेष्वायतनेषु निदध्यात् । एवं सप्त पार्थिवान् सम्भारान् आयतनेषु न्युप्य, तदुपरि तेनैव प्रकारेण सप्त वानस्पत्यानपि सम्भारान् न्युप्य, तदुपरि हिरण्यं निवपेत्[1] । ततः पूर्वं शमितस्याग्नेः भस्म अपोह्य, तदुपरि अरणी निक्षिप्य, तत्समीपे श्वेतमश्वमेकं बद्ध्वा, अरणी मन्थेत् । ततोऽग्नावुत्पन्ने सति यजमानो [क]वरमध्वर्यवे दद्यात् । ततोऽध्वर्युर्मथनजातमग्निं करीषकाष्ठशकलप्रक्षेपादिना वर्धयित्वा, वेदेः पश्चिमभागावस्थिते गार्हपत्यार्थे कुण्डे पूर्वनिर्मिते स्थापयेत् । इदमेव [ख]गार्हपत्याधानम् । ततो ब्रह्मा सामगानं कुर्यात्, न वा ॥

## दक्षिणाग्न्याधानम्

ततः सूर्यस्य अर्धोदयसमये गार्हपत्यं प्रज्वाल्य, तत्र अश्वत्थकाष्ठान्याधाय, प्रदीप्तानि तान्यंशतो गृहीत्वा, सिकताभिरुपसङ्गृह्य, उपर्युद्धृत्य हस्तेन धारयन्नध्वर्युस्तिष्ठेत्[ग] । तदा आग्नीध्रो लौकिकमग्निं यतः

---

क. यत्र यत्र सामान्यतो वरो देयत्वेन विहितस्तत्र सर्वत्र गौरेव अभिप्रेता । गामेकां दद्यादिति यावत् । गवाभावे तन्मूल्यं निष्कपरिमाणं सुवर्णं वा देयम् ॥

ख. गार्हपत्याग्नेरायतनं वृत्ताकारम् । आहवनीयस्य चतुरश्रम् । दक्षिणाग्नेरर्धचन्द्राकृति । गार्हपत्यायतनमध्यात् प्राच्यां दिशि षण्णवत्यङ्गुलमितायां भूमावाहवनीयमध्यं स्यात् । केचित् गार्हपत्याहवनीययोरन्तरालगताया एव वेदेस्तावन्मानमिच्छन्ति । गार्हपत्यायतनस्य आग्नेय्यां दिशि तत्संलग्नप्रायमेव दक्षिणाग्नेरायतनं भवति ॥

ग. आहवनीयाधानार्थं प्रज्वालितान् गार्हपत्याग्नेः कञ्चित् भागमादाय पात्रे कस्मिंश्चिन्निधाय साग्नि तत् पात्रं स्वहस्ते गृहीत्वा तत्रैव तिष्ठत्यध्वर्यौ आग्नीध्रो दक्षिणाग्निमादध्यात् इत्यापस्तम्बः ॥ *See.* आप. श्रौ. ५. १३. ८.

---

१. *See.* आप. श्रौ. ५. १७, १८. बौधा. श्रौ. २. १६. कात्या. ४. ८, ९.

कुतश्चिदानीय, गार्हपत्याद्वा गृहीत्वा मथित्वा वा दक्षिणाग्न्यायतने सम्भाराणां पूर्वनिहितानामुपरि निदध्यात्। इदमेव दक्षिणाग्न्याधानम्। अत्राहवनीयस्योपर्युद्धरणकाले ब्रह्मा वामदेव्यं साम गायेत्, न वा॥

## आहवनीयाधानम्

ततोऽध्वर्युप्रभृतयः ऋत्विजः कश्चन अश्वं पूर्वं चालयन्तः, आहवनीयदेशं प्रति प्राञ्चो गच्छेयुः। तेषां दक्षिणभागे ब्रह्मा रथचक्रं त्रिवारं परिवर्तयेत्। अश्व आहवनीयायतनस्य प्राग्भागे तिष्ठेत्। तेन प्रत्यङ्मुखेन आहवनीयसम्भारान् [क]आक्रमयेत्। ततो ब्रह्मणि साम गायति सति आहवनीयायतनस्य पुरस्तात् प्रत्यङ्मुखस्तिष्ठन्नेव अध्वर्युराहवनीयमादध्यात्। एवं त्रिष्वग्निष्वाहितेषु आज्यहोमेन काष्ठैश्चाग्नीन् वर्धयेयुः॥

## सभ्यावसथ्ययोरग्न्योराधानम्

ततो लौकिकाग्निना[ख] अरणिमथिताग्निना वा सभ्याग्निमावसथ्याग्निं च आदध्यात्तदाधानपक्षे। ततोऽश्वत्थवृक्षीयास्तिस्रस्तिस्रः समिधः शमीवृक्षीयाश्च तिस्रस्ता एकैकस्मिन्नग्नावादध्यात्। ततो मन्त्रवर्जमग्निहोत्रं जुहुयात्। ततः पूर्णाहुतिहोमः। स चाज्यद्रव्येणैव। ततो यजमान आहितानग्नीनुपतिष्ठेत। ततोऽध्वर्यवे यजमानो वरं दद्यात्। ततः प्रायश्चित्तहोमाः। ततो यजमानः सङ्कल्पकरणपूर्वकमाहिताग्निनियमान् धारयेत्। एतावदग्न्याधेयस्य प्रधानकर्म। अतः परमनुष्ठेयान्याग्नेयेष्ट्यादीनि अङ्गान्युच्यन्ते। तत्र प्रथममाग्नेयेष्टिराधानानन्तरमेव कर्तव्या। तत्र अग्निर्देवता। अष्टाकपालः पुरोडाशो द्रव्यम्। सा च पौर्णमासगताग्नेयेष्टिवत् कार्या॥

---

आहवनीयमाधाय तत्समनन्तरमध्वर्युरेव दक्षिणाग्निमादध्यादिति कात्यायनः॥

क. आहवनीयायतनस्य पूर्वस्यां दिशि प्रत्यङ्मुखावस्थितोऽश्वः यथा तदाहवनीयस्थानमुल्लङ्घ्य तत्पश्चिमभागे आगच्छेत् तथा यतेत॥

ख. अरणिमथिताग्निनैव सभ्य-आवसथ्यावादध्यादिति कात्यायनः। (*See.* का. श्रौ. ४. ९. १८.) यत्र च्छात्रा अध्याप्यन्ते शास्त्रार्थविचारादिकं वा क्रियते सा सभा। तत्र सभ्याग्नेराधानम्॥

## पवमानेष्टयः

तदनन्तरं [क]पवमानेष्टयः । तास्तिस्रः । तत्र प्रथमाया अग्निः पवमानो देवता । द्वितीयस्या अग्निः पावकः । तृतीयस्या अग्निः शुचिः । सर्वत्र अष्टाकपालः पुरोडाशो द्रव्यम् । ता एता आधानदिन एव समानतन्त्रेण अनुष्ठेयाः । अथ वा आधानदिनात् व्यहे, त्र्यहे चतुरहे, अर्धमासे, मासे, मासद्वये संवत्सरे वा कर्तुं शक्यन्ते । परमभीषां कालानां विकल्पः । यस्मिन् दिन एताः पवमानेष्टयः क्रियेरन् तस्मिन्नेव दिने सायमग्निहोत्रमारभेत । आधानात् कालान्तरे पवमानेष्टीनामुत्कर्षे अग्निहोत्रस्याप्युत्कर्षः । (कालान्तरेऽनुष्ठानम्) ॥

## आधानपवमानेष्टीनामङ्गाङ्गिभावः

पवमानेष्टीनामाधानाङ्गत्वमिति केचन मीमांसकाः[ख] । तन्मते साङ्गस्यैव कर्मणः फलजनकत्वात् पवमानेष्टीनामनुष्ठानानन्तरमेवाग्नीनां सिद्धेः तदनन्तरमेव अग्निहोत्रारम्भः । केचित्तु न आधानपवमानेष्टीनामङ्गाङ्गिभावः । परमाधानवत् पवमानेष्टीनामपि स्वत एवाहवनीयादिसम्पादकत्वम् । अत उभयेषां समुच्चय इति कथयन्ति । अस्मिन्नपि पक्षे पवमानेष्टीर्विना आहवनीयाद्यनिष्पत्तेः पवमानेष्टीरनुष्ठायैव तदनन्तरमग्निहोत्रारम्भः कर्तव्यः । अस्य सायमेव आरम्भः । सायं प्रातरनुष्ठीयमानं प्रयोगद्वयं मिलित्वैकं कर्म भवति । सायंहोमस्य अग्निदेवताकत्वादेव अस्य कर्मणोऽग्निहोत्रमिति नाम सम्पन्नमिति मीमांसकाः[१] ॥

इदानीम् आधानापेक्षितानां द्रव्याणां पात्राणां च नामानि विलिख्यन्ते—

क. अत्र प्रथमायां एवेष्टेरग्निः पवमानो देवता, नेतरयोः । तथापि तिसृणामपि पवमानेष्टित्वेन व्यवहारो याज्ञिकसम्प्रदाये प्रसिद्धः ॥

ख. आधानप्रकरणे पाठात् फलाश्रवणाच्च आधानाङ्गं पवमानेष्टय इति मीमांसावार्तिककारः । 'यदाहवनीये जुहोति' इति स्वतन्त्रविधिना पवमानेष्टीनामनन्याङ्गत्वविधानात् आधानवत् तासामप्यग्निसम्पादकत्वमेवेति मीमांसाभाष्यकारः । *See.* पू. मी. २. १. १२.

१. *See.* पू. मी. १. ४. ४.

## आधानौपयिकानि द्रव्याणि पात्राणि च

अरणिद्वयम् (अधरारणिः, उत्तरारणिश्च) अग्निमथनार्थम् ।

मन्थिप्रमन्थिनौ । तदर्थमेव ।

अथ पार्थिवाः सम्भाराः—(मृत्सम्बद्धाः)

(१) सिकताः । (५) शर्कराः (क्षुद्रपाषाणाः) ।
(२) ऊषरमृत् । (६) वल्मीकमृत् ।
(३) मूषिकोत्खाता मृत् । (७) शूकर(वराह)मुखोत्खाता मृत् ।
(४) अशोष्यजलाशयमृत् । (८) हिरण्यम् ।

अग्निनिधानात् पूर्वमेते कुण्डेषु क्षेपणीयाः ॥

अथ वृक्षसम्बन्धिनः सम्भाराः—

(१) अश्वत्थकाष्ठशकलानि । (५) पलाशवृक्षकाष्ठशकलानि ।
(२) औदुम्बरकाष्ठशकलानि । (६) विकङ्कतवृक्षशकलानि ।
(३) शमीवृक्षकाष्ठशकलानि । (७) पद्मपत्राणि च ।
(४) अशनिहतवृक्षकाष्ठशकलानि[५] ।

शीतजलमुष्णजलं च (पत्नीयजमानयोः स्नानार्थम्)

दुकूलवस्त्राणि (तयोरेव परिधानार्थम्)

ग्रामादिविहृतस्य अश्वत्थवृक्षस्य फलवत्यः तिस्रः समिधः (आ[illegible]दनिक्रमसाधनार्थम्) ॥

अश्वत्थवृक्षीयाः समिधो नव
शमीमय्यः समिधो द्वादश
वैकङ्कत्यः समिधस्तिस्रः
(गार्हपत्यादिषु त्रिष्वग्निषु तदा तदा निक्षेपणार्थमेव विध्यनुरोधेन)

पैत्तलं ताम्रमयं वा पात्रम् (ब्रह्मौदनपाकार्थम्)

[illegible] (तत्तदग्निप्रणयनार्थम्)

दर्वी पैत्तली ताम्रमयी वा (ब्रह्मौदनोद्धरणार्थम्)

[illegible] पार्ण्यं [illegible] वा (होमाभिघारणार्थम्)

---

५. अरण्ये स्थितस्य वृक्षस्य यस्योपरि अशनिः पतति, तेन च यो हतः [illegible] (वृक्षः) ।

६. [illegible] आप. श्रौ. ५.१.४; ५. बौधा. २. १२.

| | |
|---|---|
| वत्सतर्यः[क] तिस्रः | (अध्वर्यवे दानाय) |
| यज्ञियवृक्षकाष्ठानि | (अग्निसमिन्धनार्थम्) |
| अश्वः | (अग्न्यायतनेषु पदनिक्षेपणार्थम्) |
| अजः | (आयतनसमीपे बन्धनार्थम्) दक्षिणार्थं च। |
| सिकताः | (अग्निभिः सह ग्रहणार्थम्) (उपयमनार्थम्[ख]) |
| रथचक्रम् | (आवर्तनार्थम्[ग]) |
| गौः | (विदेवनार्थम्) |

आधानार्थदक्षिणाद्रव्याणि—(१) द्वादश गावः (२) अजः (३) पूर्णपात्रम्[घ] (४) वासः (५) मिथुनौ गावौ (स्त्रीपुंसरूपौ) नवीनो रथः (७) वहनसमर्थोऽश्वः (८) अनड्वान् ॥

चत्वार ऋत्विजः—अध्वर्युः, ब्रह्मा, होता, आग्नीध्रश्च ॥

एवं पवमानेष्ट्यादीनामप्यत्र अनुष्ठेयत्वात् ऐष्टिकपात्राणामप्यस्या-वश्यकता। परं दर्शपूर्णमासप्रकरण एव तानि प्रदर्शनमर्हन्तीति तत्रैव प्रदर्श्यन्ते। अतस्तेषां स्वरूपं तत एव अवगन्तव्यम् ॥

॥ इत्यग्न्याधानं समाप्तम् ॥

## अग्निहोत्रम्

एवं पूर्वोक्तप्रकारेण कृताधानः त्रैवर्णिकः आहिताग्निपदवाच्यो भवति। तस्यैव [ङ]सपत्नीकस्य श्रौतकर्मस्वधिकारः। तानि च श्रौतकर्माणि वेदेषु परस्सहस्राणि विहितानि। तेषां नामतो निर्देशस्त्वन्ते चिकीर्ष्यते। इदानीं तेषामेव केषांचित् स्वरूपं विलिख्यते। तेषु कर्मसु अग्निहोत्रमेव प्रथमपातीति तस्यैव स्वरूपं विव्रियते। तच्च पुरुषेण त्रैवर्णिकेन

---

क. वत्सभावमतिक्रान्ताः निवृत्तस्तन्यपानाः वत्सतर्यः।

ख. पात्रे अग्नेरधः पार्श्वेषु च सिकतानां स्थापनमुपयमनम्।

ग. पुनः पुनरश्वस्य दक्षिणभागे रथचक्रस्य भ्रामणम्।

घ. अष्टाविंशत्युत्तरशतसङ्ख्याकमुष्टिपरिमितं व्रीहियवादिधान्यं पूर्ण-पात्रमित्युच्यते।

ङ. अकृतविवाहस्य श्रौतेषु कर्मस्वधिकारो नास्ति। मृतपत्नीकस्य त्वग्निहोत्रदर्शपूर्णमासयोरधिकारो भवतीति रुद्रदत्तः प्रसाधयति। मृतपत्नीकस्य अग्निहोत्राद्यनुष्ठानं शिष्टसम्प्रदाये नास्ति।

अवश्यकर्तव्येषु नित्यकर्मसु परिगणितं स्मृतिकारैः । अत एव तत् यावज्जीवमनुष्ठेयम् । दर्शपूर्णमासोक्तः कालविकल्पः—जराजीर्णो वा विरमेत्, विंशतिं वा वर्षाणि अविच्छेदेन अनुष्ठाय ततः परित्यजेत् इत्यादिर्नात्र प्रसरति । तस्य च सायमुपक्रमः (आरम्भः), प्रातरपवर्गः (समाप्तिः) । एवं च सायं प्रातरिति कालद्वयानुष्ठानादेकं कर्म निष्पन्नं भवति । तत्र सायङ्काले यदा सूर्यरश्मयः भूभागं परित्यज्य वृक्षाग्र एव प्रकाशमाना दृश्यन्ते तदा सायंहोमाः; प्रातःकाले च प्राच्यां दिशि यदा रश्मय आविर्भूता भवन्ति तदा च प्रातर्होमा अनुष्ठेयाः ॥

## अग्निहोत्रे उदितानुदितहोमिभेदः

तत्र उदितहोमिनः केचित् । केचिदनुदितहोमिनः । तेषु बह्वृचाः कातीयाः छन्दोगाश्च अनुदितहोमिनः । कठास्तैत्तिरीया मैत्रायणीयाश्च उदितहोमिनः[क] । अग्निप्रणयनं परं सर्वेषामुदयास्तमययोः पूर्वमेव । उदयादस्तमयाच्च पूर्वमेव गार्हपत्यादग्निमुद्धृत्य कुण्डेषु स्थापयित्वा प्रज्वलयेत् । ततोऽनुदय उदये वा स्वसूत्रानुसारमग्निहोत्रमनुतिष्ठेत् ॥

## तदनुष्ठानप्रकारः

तत्र सायमग्निहोत्रार्थं सङ्कल्प्य उपवेषेण गार्हपत्यादग्निं ज्वलन्तमुद्धृत्य, तं दक्षिणाग्नेरायतने तूष्णीं स्थापयित्वा, पुनरपि गार्हपत्यादग्निमुद्धृत्य तं मन्त्रेण आहवनीये स्थापयेत् । ततो यजमान इध्मकाष्ठानि स्वयमाहृतानि त्रिष्वप्यग्निषु क्रमेण निदध्यात् । ततोऽग्नीन् गन्धपुष्पादिभिरलङ्कृत्य, उदगग्रैः प्रागग्रैश्च दर्भैः (कुशैः) परिस्तीर्य, या यजमानस्य आग्निहोत्री[ख] गौः तां विहारस्य[ग] दक्षिणत आनीय अवस्थाप्य, सूर्यास्तादनन्तरं तां दुग्ध्वा दुग्धं पयः श्रपणार्थायां कुम्भ्यां निनीय, आहवनीयगार्हपत्यदक्षिणाग्नीन् क्रमेण जलेन परिषिच्य, गार्हपत्यादारभ्य आहवनीयपर्यन्तम् अविच्छिन्नामुदकधारां वेद्यां प्रस्राव्य, गार्हपत्याग्नेः काश्चन

क. सूर्योदयादनन्तरं यच्छाखिनोऽग्निहोत्रं कर्तव्यतया विहितं स उदितहोमी । ततः पूर्वं तत् कुर्वाणा अनुदितहोमिनः ।

ख. यस्याः पयो दुग्ध्वा अग्निहोत्रं क्रियते सा आग्निहोत्री गौः ।

ग. विहारो यज्ञानुष्ठानस्थानम् ।

१. आप. श्रौ. ६. ३. ८–१४. बौ. श्रौ. ३. ४. का. श्रौ. ४. १४. १.

अङ्गारान् पृथक्कृत्य तदायतनाद्बहिः वायव्यकोणे तान्निक्षिप्य, तदुपरि अग्निहोत्रार्थपयःपूर्णां कुम्भीं निक्षिप्य, तत् पयः श्रपयेत् । यस्मिन् पात्रे दोहनं कृतं तत् पात्रं प्रक्षाल्य, तज्जलं पात्रस्थदुग्धमिश्रम् अन्यद्वा शुद्धजलं स्रुव[क] आनीय, तत् कुम्भ्यां प्रतिषिच्य त्रिः पर्यग्निं कृत्वा[ख] [ग]वर्त्मकरणेन प्रागुद्वास्य, त्रिर्भूमौ तत् प्रतिष्ठाप्य, पूर्वं गार्हपत्यादुद्धृतानङ्गारान् पुनस्तस्मिन्नेव प्रतिक्षिप्य, स्रुवमग्निहोत्रहवणीं च गृहीत्वा ते आहवनीये प्रतितप्य, सम्मृश्य, कुम्भीतः पयो गृहीत्वा, अग्निहोत्रहवण्यां क्षिपेत् । एवं चतुर्वारं क्षेप्तव्यम् । तत् हविरुन्नयनमित्युच्यते । उन्नीतं तत् पयः गार्हपत्यस्य पश्चिमभागे स्थापयित्वा गार्हपत्ये स्वं हस्तं प्रताप्य, तेन तत् पयः सम्मृश्य, [घ]प्रादेशमात्रीं पलाशसमिधम् एकां, द्वे, तिस्रो वा अग्निहोत्रहवण्या[ङ] उपरि धारयन् गार्हपत्यस्योपरिभागेन ता आहवनीयसमीपे नयन्, आहवनीयस्य पश्चिमभागे सादयित्वा, अप उपस्पृश्य, ततस्ताः समिधः (एकां, द्वे, तिस्रो वा यथापूर्वं गृहीताः) आहवनीय आधाय, अग्निहोत्रहवणीस्थं पय आहवनीये जुहुयात् । सा अग्निहोत्रस्य प्रथमा आहुतिः । सा अग्निदेवत्या ॥

ततः स्रुगग्रात् पयोलेपं हस्तेन गृहीत्वा भूमौ निमृज्य, अग्निहोत्रहवणीं भूमौ निक्षिप्य, गार्हपत्यं समीक्ष्य, पुनस्तां गृहीत्वा द्वितीयामाहुतिं जुहुयात् । सा प्रजापतिदेवताका । एवं प्रातरप्याहुतिद्वयं होतव्यम् । तत्र प्रथमा सूर्यदेवत्या । द्वितीया प्रजापतिदेवताका । इमाश्चतस्र आहुतयः अग्निहोत्रे प्रधानभूताः । अमूषां चतसृणामाहुतीनां मध्ये सायंकालीनप्रथमाहुतेरग्निदेवत्यत्वात् तदादायैव सर्वासामाहुतीनामग्निहोत्रनामत्वं छत्रिन्यायेन[च] । इदं च आपस्तम्बादियाज्ञिकमतेन[१] ॥

---

क. वर्तुलपुष्करो दर्व्याकारः स्रुवः ।

ख. कुम्भ्या उपर्यङ्गारैः परितो भ्रामणं पर्यग्निकरणम् ।

ग. अग्निसमीपे उद्वासितां कुम्भीं भूमौ निक्षिप्य, तथैव प्राग्देशं प्रति कर्षेत् । तदाकर्षमार्गः कृष्णवर्णो भवति । स व्यापारो वर्त्मकरणमित्युच्यते ।

घ. नवाङ्गुलिपरिमाणः प्रादेशः ।

ङ. यया अग्निहोत्रं हूयते सा जुह्वाकारा अग्निहोत्रहवणी ।

च. बहूनां मध्ये एकस्यापि तद्विशिष्टत्वे सति तदादाय सर्वेषु तत्सम्बन्धेषु तच्छब्दप्रयोगः छत्रिन्यायः । (See. पू. मी. १. ४. १९.)

---

१. See, आप. श्रौ. ६, १३. १-९.

## अग्निहोत्रनाम्नि मतभेदः

बह्वृचानां तु उपरि वक्ष्यमाणाः—गार्हपत्ये चतस्रः, दक्षिणाग्नौ चतस्र इत्यष्टौ, एवं प्रातरष्टौ इत्येवं षोडश। पूर्वोक्ताश्चतस्र इति मिलित्वा विंशतेरप्याहुतीनाम् अग्निहोत्रशब्दवाच्यत्वम्। मीमांसकसम्प्रदायोऽपीमं पक्षं परिपुष्णाति। होमकालेऽग्निहोत्रहवणीस्थं पयो न सर्वं होतव्यम्। किन्तु भक्षार्थं किञ्चित्तत्रैव अवशेषयेत्। ततः पूर्ववल्लेपं गृहीत्वा वेदिभूमौ निमृजेत्। तत् पितृदेवताकम्। ततोऽग्निहोत्रहवणीं भूमौ निक्षिप्य स्रुवं गृहीत्वा तं पयसा प्रपूर्य तेन गार्हपत्ये चतस्र आहुतीः दक्षिणाग्नौ च तावतीराहुतीर्जुहुयात्। तत्र अग्निः गृहपतिः देवता आदितश्चतसृणामाहुतीनाम्। अग्निर्गृहपतिः, रयिपतिः, पुष्टिपतिः, कामः, अन्नाद्यो वा विकल्पेन। एवमग्निरदाभ्यः परिषद्यो दाक्षिणाग्निकानां प्रथमातृतीयाचतुर्थीनामाहुतीनां देवता। अग्निरन्नपतिर्द्वितीयस्या इति वेदितव्यम्॥

## अग्न्युपस्थानं लेपभक्षश्च

एवं होमान् हुत्वा, अग्नीन् परिषिच्य, आहवनीयस्य दक्षिणभागेऽवस्थाय, अग्नीनुपतिष्ठेत। ततो वेदिमध्येऽग्निहोत्रहवणीं निधाय, लेपं होमावशिष्टं भक्षयित्वा, आचम्य, द्विः स्रुचं निर्लिह्य,[क] हस्तं प्रक्षाल्य आचम्य, ततो जलेन तां पूरयित्वा तथैव आचम्य, अग्निहोत्रहवणीं दर्भैः संशोध्य प्रक्षालयेत्। ततः पुनस्तां पूरयित्वा तज्जलं चतसृष्वपि दिक्षु हस्तेन व्युत्सिञ्चेत् तस्यै तस्यै देवतायै (विभज्योर्ध्व सेचनं व्युत्सेचनम्)। तत्र सर्पाः, सर्पाः पिपीलिकाः, सर्पेतरजनाः, सर्पदेवजनाश्च क्रमेण देवताः। पुनश्च तां पूरयित्वा आहवनीयस्य पश्चात् तदेकदेशं [ख]निनीय, शेषं पत्न्या अञ्जलौ निनयेत्। पुनस्तां जलेन पूरयित्वा सप्तर्षिभ्य उदग्देशे तज्जलं निनयेत्। ततः प्रत्यावृत्य अग्नीन् प्रज्वलयेत्। ततोऽग्नीन् पूर्ववत् परिषिच्य [ग]अनाज्ञातादिमन्त्रत्रयं जपित्वा, अग्निहोत्रस्थाल्यां

क. निर्लेहनं नाम पात्रगतस्य पयसो जिह्वाग्रेण पात्रस्पृष्टेन चूषणम्। तच्च कलियुगे निषिद्धमिति नेदानीं याज्ञिकैरनुष्ठीयते।

ख. निनयनं क्षारणम्।

ग. अनाज्ञातपदघटितमन्त्रादिकं मन्त्रत्रयं तच्छब्देन व्यवह्रियते।

१. See. आप. श्रौ. ६. १३. ९. also. आश्व. श्रौ. २. २.

तृणमङ्क्त्वा, तदाहवनीये प्रहृत्य, अग्निहोत्रस्थालीं प्रक्षाल्य, हविरुन्नयनदेशे तज्जलं निनयेत् । ततो यजमानो वेद्यां हस्तं प्रसार्य, तस्मिन्नप आसिच्य ताः स्वशिरस्यानयेत् । एतदन्तमग्निहोत्राख्यं कर्मोच्यते ॥

## अग्निहोत्रे कर्ता

इदमग्निहोत्रं सायंप्रातःकालयोः यजमानः स्वयमेव जुहुयात् । यदि न शक्यते तर्हि पुत्रादिभिः ऋत्विजा वा कारयेत् । पर्वणि तु (पौर्णमास्याम् अमावास्यायां वा) [क]यजमान एव जुहुयात्, नान्यैर्होवयेत् । तत्र नित्यद्रव्यं पयः, दधि, यवागूश्च । एतेषामेव फलार्थतयाप्यनुष्ठानम् । तत्र पशुकामः स्वर्गकामो वा पयसा जुहुयात् । इन्द्रियकामो दध्ना, यवाग्वा ग्रामकामः, ओदनेन अन्नकामः, तण्डुलैरोजस्कामो बलकामो वा । तेजस्कामो घृतेन इति काम्यानि द्रव्याणि ॥

## अग्निहोत्रप्रशंसा

इदं च अग्निहोत्रं गृहस्थेनैव सभार्येण सता अवश्यमनुष्ठेयम् । कस्यामप्यवस्थायामग्निहोत्ररहितेन न स्थातव्यं त्रैवर्णिकेन । दीनो धनी वा सर्वोऽपीदमनुतिष्ठेत् यावत् जीवति । सत्स्वप्यतिमहत्सु बहुवर्षबहुव्ययसाध्येषु क्रतुषु अग्निहोत्रस्य वेदेषु पुराणेषु तदनुयायिषु च ग्रन्थेषु यावती प्रशंसा दृश्यते सा न अन्यस्य कस्यापि क्रतोः । अग्निहोत्रमननुष्ठाय नान्यः क्रतुरनुष्ठातुं शक्यते । तत्र विवाहानन्तरं जातपुत्रकृष्णकेशत्वोपलक्षिते वयसि वर्तमानेन त्रैवर्णिकेन पुरुषेण सपत्नीकेन अग्न्याधेयं कर्तव्यमित्युक्तं प्राक् । एवमाहितानां गार्हपत्यदक्षिणाग्न्याहवनीयरूपाणां त्रयाणामग्नीनां मध्ये गार्हपत्योऽग्निरविच्छेदेन यावज्जीवं

---

क. तत्रामावास्यायां रात्रौ यवाग्वा अग्निहोत्रं कर्तव्यम्, नान्यैर्द्रव्यैः । तण्डुलैः शिथिलपक्वा यवागूः इति कर्कः । विरलद्रवा सेत्यपरे ।

---

१. See. आप. श्रौ. ६. १५. १. का. श्रौ. ४. १५. १२–२५ । पयो यवागूरिति धूर्तस्वामी । अत्यन्तद्रवरूपेण पक्वास्तण्डुला एव यवागूरिति सम्प्रदायः । सान्नाय्ययाजिन एव अयं यवागूनियमः । तस्य आतञ्चनार्थे तदपेक्षणात् । See. also. आश्व. श्रौ. २. ३. १.

धार्यः[क] । इतरावग्नी तत्तत्कर्मकाले गार्हपत्यादुद्धृत्य स्वस्वायतने स्थाप्येते । यदर्थमुद्धृतौ तौ तत्कर्मसमाप्त्यनन्तरं तथैव परित्यज्येते । तौ तत्रैव शान्तौ भवतः । पुनः कर्मकाले तौ नवीनतया गार्हपत्यात् प्रणीय स्वस्वकुण्डे स्थापयित्वा कर्मकरणम् । सायं प्रातश्च होमकाले, रात्रौ च यजमानस्तत्पत्नी वा, अग्न्यगारेऽवश्यं वर्तेत, न अन्यत्र गच्छेत् । अन्यतरेण गृहेऽवश्यं स्थातव्यम् । द्वयोरपि बहिर्ग्रामान्तरगमनावश्यकतायां सहैव अग्निभिः गच्छेताम् ॥

## अग्निसमारोपणादि

तत्र यजमानोऽग्नीनरण्योरात्मनि वा [ख]समारोप्य पत्न्या आन्वारब्ध एव गच्छेन्मौनेन । गन्तव्यदेशं प्राप्य, पूर्वं समारोपितानग्नीन् मन्त्रेणोपावरोहयेत्[ग] । तत्र आत्मसमारोपणे गन्तव्यदेशप्राप्त्यनन्तरं लौकिकमग्निं शिष्टवैदिकगृहादाहृत्य तस्मिन्नात्मसमारोपितमग्निं मन्त्रेणोपावरोहयेत् । अरणिसमारोपणे तु गन्तव्यदेशावधि ते अरणी यजमान एव स्वहस्त आदाय गच्छेत् । गत्वा तत्र अरणी मथित्वा तत उत्पन्नेऽग्नौ उपावरोहणं कुर्यात् । गृह एव अग्निं परित्यज्य, पत्नीयजमानयोरुभयोरपि बहिर्गमनेऽग्निविनाशो[घ] भवेत् । तदा पुनरग्निमत्त्वसिद्धये पुनराधानमेव

---

क. अत्र धारणं नाम—गार्हपत्यकुण्डेऽन्तः करीषपिण्डं निक्षिप्य तदुपरि गार्हपत्याग्निं प्रज्वलय्य, पिण्डे तं सङ्क्रमयेत् । तत्र सङ्क्रान्तोऽग्निर्यथा सर्वदा तिष्ठेत् तथा रक्षणमेव । न तु तस्य सर्वदा प्रज्वालनम् । एवमेव (गतश्रियः) लब्धधनस्य, ग्रामनेतुः, राजन्यस्य च त्रयाणां पञ्चानां वा अग्नीनामजस्ररक्षणम् । होमकाले तु कुण्डान्तःस्थान् तान् करीषपिण्डान् साग्नीन् बहिरुद्धृत्य, पुनस्तत्तत्कुण्डानामन्तः करीषपिण्डान्तराणि निक्षिप्य, तांस्तुषैः भस्मना वा आच्छाद्य, तदुपरि पूर्वोद्धृतान् तांस्तानग्नीनवस्थाप्य प्रज्वलय्य तत्र जुहुयादित्येव याज्ञिकसंप्रदायः ।

ख. समारोपणं नाम - गार्हपत्यकुण्डगतस्य अग्नेररण्योरारोहणार्थं मन्त्रेण प्रार्थना । तथा आरूढत्वेन मनसा चिन्तनं च ।

ग. उपावरोहणं नाम - लौकिके, अरणिमथिते वा अग्नौ मन्त्रेण अवतारणम्, तथा चिन्तनं च ।

घ. अग्निविनाशो नाम - अग्निनिष्ठाहवनीयत्वाद्यदृष्टधर्मविनाशः । न तु स्वरूपनाशः । तत्स्वरूपस्य तथैव अवस्थितेः । पुनस्तादृशादृष्टोत्पादनार्थमेव च पुनराधानानुष्ठानम् ।

कार्यम् । पुनराधानं तु आधानापेक्षया किञ्चित् विलक्षणं कर्म । तत्र प्रथमाधानोक्तानि कानिचन कर्माणि न अनुष्ठातव्यानि । तावन्मात्रेणैव अग्निसिद्धिः ॥

॥ इत्यग्निहोत्रप्रकरणम् ॥

## विषयविवेचनम्

अत्र केचन विषया विविच्यन्ते सम्भावितसंशयविनिवृत्तये । विधिवदुपनीतस्त्रैवर्णिको माणवकः, गुरुगृहे ब्रह्मचर्येण वसन् साङ्गं वेदं, वेदौ, वेदान् वा यथानियमं गुरोरधीत्य, स्वगृहं प्रत्यावृत्तः, कुलशीलादिसम्पन्नां काञ्चन कन्यामुद्वहेत् । यस्मिन्नग्नौ वैवाहिकहोमाः क्रियन्ते, सोऽग्निः ततः प्रभृत्येव संरक्षणीयः । स गृह्याग्निरित्युच्यते । तदर्थम् आधानकर्तव्यता नास्ति तैत्तिरीयच्छन्दोगबह्वृचानाम् । वाजसनेयिनां तु तदर्थमपि स्मार्ताधानाख्यं किञ्चन कर्म विहितं तद्गृह्यसूत्रे । स च यावज्जीवं धारणीयः । तस्मिन्नेव अग्नौ गृह्योक्तानि कर्माण्यनुष्ठेयानि । समुचितं कालं प्राप्य, आहिताग्नित्वसिद्धये श्रौताधानं कर्तव्यम् । तेन च अग्नित्रयस्य, अग्निपञ्चकस्य वा सिद्धिः । स च कालः प्रायेण पञ्चविंशतिवर्षवयस्कत्वरूपो निर्णीतो याज्ञिकैर्धर्मशास्त्रकारैश्च । विवाहितेनैकैकेनापि त्रैवर्णिकेन अग्न्याधानमनुष्ठेयम् । अन्यथा अनाहिताग्नितारूपो दोष एनमृच्छेत् । तत्र स्वपितुरनाहिताग्नित्वे स्वस्य अधिकारो नास्ति । अतः पितुराधानं कारयित्वा ततः स्वयं कुर्वीत । एवमेव ज्येष्ठभ्रातुरपि । परं ज्येष्ठभ्रातुरनाहिताग्नेराधानकरणेऽनिच्छायां, ततोऽनुमतिं लब्ध्वा कनीयान् स्वयमाधानेऽधिकुर्यात् । अतश्च जीवतः पितुराहिताग्नित्वे सत्येव पुत्रा अग्निमादधीरन् । तन्मरणानन्तरं वा आदधीरन् । जीवतो भ्रातुरनाहिताग्नेरनुज्ञां लब्ध्वा तन्मरणानन्तरं वा स्वयमाधानं कुर्युः । एवं सोमयागानुष्ठानेऽप्ययमेव न्यायोऽनुसरणीयः ॥

---

१. See. आप. श्रौ. ५.२६., बौधा. श्रौ. ३. १., कात्या. श्रौ. ४.११.

२. उपरि लिखितान् विषयानधिकृत्य कैश्चित् क्वचित् अन्यथा अन्यथा लिखितम् । तदवलोकनेन सुधियां कदाचित् विषयेष्वेषु मा प्रसाङ्क्षीदन्यथाभाव इत्येतदर्थमिमे विषया उपरितना विवेचिताः । प्रायेणैवंविधान् विषयान् साम्प्रदायिका एव साधु विवेचयितुं प्रभवन्तीति किमत्र अधिकं वक्तव्यम् ।

तत्र एकस्मिन् गृहे पिता पूर्वं ततश्च भ्रातरो बहवोऽपि ज्येष्ठक्रमेण अग्न्याधानं कर्तुं प्रभवन्ति । अत एव एकस्मिन्नेव गृहे बह्वयोऽप्यग्निशालाः पितापुत्रीयाः, भ्रात्रीयाश्चैककाले भवितुमर्हन्ति । परं सर्वेऽपि स्वाहितेष्वेव अग्निषु जुहुयुः, यजेरंश्च । परकीयेषु तेषु तु तत्तदृत्विक्त्वेन होतुं यष्टुं वा प्रभवेयुः, न यजमानत्वेन । परकीयेऽग्नौ परेण स्वकर्मानुष्ठाने, न केवलं कर्मजन्यादृष्टासिद्धिः अग्नीनामपि नाशो भवेत् । स्मार्तं वैश्वदेवं परमेकस्मिन् पाके भुञ्जानानामनेकेषामपि पितृपुत्रादीनामेकमेव भवेत् । तस्य भोक्ष्यमाणान्नसंस्कारकत्वेन, एकेनैव वैश्वदेवेन भाण्डस्थस्य समग्रस्याप्यन्नस्य संस्कारजननात् ॥

दायविभागस्तु पितुरूर्ध्वं भ्रातॄणां परस्परं भवति । यदि तु जीवन्नेव पिता पुत्राणां स्वस्य च विभागमिच्छति तदा पित्रा सह विभागो भवितुमर्हत्येव । तदा पृथक्पाकोऽपि भवति । अतश्च जीवति साग्नौ पितरि, सति वा, असति वा दायविभागे सदाराणां पुत्राणामाधानाग्निहोत्रादिषु श्रौतकर्मस्वधिकारोऽस्त्येवेति शास्त्रमर्यादा ॥

॥ इति साधारणा विषयाः ॥

## दर्शपूर्णमासौ

उक्तोऽग्निहोत्रानुष्ठानप्रकारः ॥

अथेदानीं दर्शपूर्णमासयोः स्वरूपं, तदनुष्ठानप्रकारश्च अनवगततत्स्वरूपाणां सुखावबोधाय सङ्गृह्य विलिख्यते । कृताधानस्य दारवतः त्रैवर्णिकस्य तत्र अधिकारः, न अकृतदारस्य, न वा मृतपत्नीकस्य । प्रत्येकं दिनद्वयानुष्ठेयमिदं कर्म । पौर्णमास्यां प्रातरारभ्य प्रतिपदि पूर्वाह्णे समापनीयम् । एवममावास्यायां प्रातरारभ्य तदनन्तरप्रतिपदि पूर्वाह्णे समापनीयम् । तत्र 'यदहरेवैनं श्रद्धोपनमेत् अथ आदधीत, अथ यजेत' इति वचनात् उत्पन्नश्रद्धः पुरुषो यस्मिन् कस्मिंश्चिद्वसन्तर्तौ विधिवदग्नीनाधाय, आधानदिन एव पवमानेष्टीरनुष्ठाय तद्दिन एव सायमग्निहोत्रमारभेत । आरभ्य च प्रतिदिनं सायं प्रातश्चाग्निहोत्रं [क]जुह्वत्, समनन्तरभाविन्यां पौर्णमास्यां मलमासशुक्रास्तादिदोषरहितायाम्, अन्वारम्भणीये-

---

क. अयं च होमपूर्वाधानपक्षः । इष्टिपूर्वाधानपक्षे तु आधानानन्तरं पौर्णमास्यामदुष्टायामिष्ट्यारम्भ एव कर्तव्य इति पूर्वं निरूपितम् ।

ष्ट्यनुष्ठानपूर्वकं दर्शपूर्णमासावारभेत । आरभ्य पूर्वं तस्मिन् पर्वणि पौर्णमासं यागमनुतिष्ठेत्, अनन्तरस्मिन् दर्शे दर्शयागम्[क] । उभयत्रापि चत्वार ऋत्विजः—अध्वर्युः, ब्रह्मा, होता, आग्नीध्रश्च । एतेषामत्र समप्राधान्यमेव । न सोमयागवदुच्चनीचभावः ॥

पौर्णमास्यां त्रीणि प्रधानानि—अग्निदेवताकः पुरोडाशद्रव्यको यागः प्रथमः । विष्णुप्रजापत्यग्नीषोमान्यतमदेवताकः उपांशुयाजाख्यो द्वितीयः । अग्नीषोमदेवताकः पुरोडाशद्रव्यको यागस्तृतीयः । अन्ये ये तत्प्रकरणपठिता यागहोमादयः ते सर्वे तदङ्गभूताः । प्रधानस्य फलोत्पादनयोग्यताजननार्थमेव अङ्गानामनुष्ठानम् । एवममावास्यायां प्रधानत्रयम्—आग्नेयः पुरोडाशयागः, ऐन्द्रो दधियागः, ऐन्द्र एव च पयोयाग इति । अत्रापि प्रयाजादयोऽङ्गभूता अनुष्ठीयन्ते । ते च यद्यपि एकैकस्याङ्गभूता इति त्रयाणां कृते त्रिरनुष्ठेयाः पूर्णिमायाम्, त्रिश्च दर्शे इत्यापतति, तथापि एककालानुष्ठीयमानानामनेकेषामपि प्रधानानामङ्गानि सकृदेव अनुष्ठेयानीति पूर्वतन्त्रनिर्धारितं न्यायमनुसृत्य पूर्णिमायां त्रितयोद्देशेन सकृत् दर्शे च त्रितयोद्देशेन सकृदनुष्ठीयन्ते ॥

तेषु केचन यागपदवाच्याः । केचन होमपदाभिधेयाः । तत्र ये यागास्ते तिष्ठतैव होतव्याः । ये होमास्त उपविष्टेन होतव्याः । अन्यानि चाङ्गानि यथासम्भवमनुष्ठेयानि । एवं, यागश्चेत् 'वौषट्' इति वषट्कारमुक्त्वा अग्नौ हविः प्रक्षेप्तव्यम् । होमश्चेत् 'स्वाहा'कारमुक्त्वा तदित्ति विवेकः । तत्र 'यजति'शब्देन विहितो यागः । 'जुहोति'शब्देन विहितो होम इति बोध्यम् ॥

तौ दर्शपूर्णमासौ द्विविधौ—नित्यौ काम्यौ चेति । प्रतिदर्शं प्रतिपौर्णमासं च यावज्जीवं पुरुषेण अनुष्ठीयमानत्वात्, अननुष्ठाने प्रत्यवायोत्पत्तिकथनाच्च नित्यत्वम् । तत्तत्फलमुद्दिश्य अनुष्ठानविधानाच्च काम्यत्वम् । तत्र नित्यौ यावत्पर्यन्तं जीवति पुरुषस्तावत्पर्यन्तमविच्छेदेन पर्वस्वनुष्ठेयौ[ख] ।

क. पर्वद्वयानुष्ठेयमपीदमेकं कर्म, यथा सायंकाले प्रातःकाले च कृतं होमसमुदायद्वयं मिलित्वा एकमग्निहोत्राख्यं कर्म भवति, तद्वत् ।

ख. त्रिंशद्वर्षपर्यन्तमविच्छेदेन दर्शपूर्णमासान् अनुष्ठाय ततः परित्यागः । दाक्षायणयाजिनस्तु पञ्चदशैव वर्षाण्यनुष्ठेयानि । वृद्धावस्थायां वा त्यागो नित्ययोरपि इत्यादयः पक्षा उक्ताः सूत्रग्रन्थेषु ।

१. See. कात्या. १. २. ६.

काम्यौ च यदा फलेच्छा उदेति तदा विहिताविगीतकाले सकृदनुष्ठेयौ । पुनस्तस्यैव फलस्य तज्जन्यफलान्तरस्य वा अपेक्षायां सत्यां पुनरनुष्ठानम् । तत्र पुरोडाशस्य साक्षात्प्रदेयभूतस्य प्रकृतिभूतं द्रव्यं व्रीहयो यवा वा । व्रीहीणां यवानां च विकल्पः । परं तु दर्शपूर्णमासयोरारम्भकाले व्रीहयो यवा वा स्वेच्छया ग्राह्याः । अनन्तरं द्वितीयादिप्रयोगे प्रथमप्रयोगगृहीतेनैव [क]द्रव्येण यावज्जीवमनुष्ठानं कार्यम् । तयोः दर्शपूर्णमासयोः न केवलं स्वर्गमात्रार्थत्वम्, अभिलषितसर्वफलार्थत्वं च शास्त्रेण अवबोध्यते ॥

## यागानुष्ठानकालः

पर्वप्रतिपदोस्सन्धिः प्रधानानुष्ठानस्य मुख्यः कालः । स यदि कदाचिदपराह्णे रात्रौ वा आपतेत् तदा तदनुष्ठानस्य निषेधात् द्वितीयदिन एव प्रातः प्रधानानुष्ठानम् । तदनुरोधेन तत्पूर्वदिन एव कर्मण आरम्भः । दर्शपूर्णमासावेव तदितरासामिष्टीनां प्रकृतिभूतौ सामान्यतः । पशुयागप्रकृतिभूताग्नीषोमीयपशुयागस्य च । विशेषास्तु द्रव्यदेवतादिसादृश्यादवगन्तव्याः । तत्र अध्वर्युणा यागकाले पठनीया मन्त्राः यजुर्वेदे आम्नाताः । ते चोपांशु चातुस्वर्येण पठनीयाः । होत्रा पठनीया मन्त्रा ऋग्वेदीयाः[ख] । ते च याज्यापुरोनुवाक्याप्रैषादिरूपा ऐकस्वर्येणोच्चैश्च पठनीयाः । तदतिरिक्ताश्च केचित् जपादयो यथासम्भवमुपांशुस्वरादिना । प्रैषा आध्वर्यवा अत्युच्चैरेव, परसम्बोधनार्थत्वात् इति स्वरूपविवरणं दर्शपूर्णमासयोः ॥

---

क. यागीयं द्रव्यम्, तदीया देवता, तदीयः काल इत्यादीनां यत्र द्रव्यान्तरादिभिः सह विकल्प उक्तः, तत्र प्रथमानुष्ठाने वैकल्पिकद्रव्येषु यत्किञ्चित् ग्रहीतव्यम् । तत्र स्वेच्छैव नियामिका । द्वितीयानुष्ठाने तु पूर्वप्रयोगगृहीतमेव ग्राह्यम्, नान्यत् । See. पू. मी. १२. ३. ६.

ख. याज्यापुरोनुवाक्यारूपा मन्त्रा इष्टिपशुचातुर्मास्योपयोगिनो यजुर्वेदेऽपि पठिताः; ऋग्वेदेऽपि । एवं सूत्रकारोऽपि भगवानापस्तम्बश्चातुर्मास्यान्तभागस्य हौत्रभागमपि पपाठ । व्याख्यातारोऽपि अनुक्तमन्यतस्तं जगृहुः । एवं चातुर्मास्यान्तभागस्य याजुषहौत्रम्, आर्चिकहौत्रमिति द्विधा प्रचलति । तत्र आपस्तम्बीया बौधायनीयाश्च, आदित एव आर्चिकमेव हौत्रमनुतिष्ठन्ति । कठमैत्रायणीयास्तु चातुर्मास्यान्तेषु कर्मसु याजुषं तदुपरि आर्चिकं च हौत्रमनुतिष्ठन्ति ।

---

१. See. आप. श्रौ. २४. ३. ३२—४५.

## पौर्णमासीदिनकृत्यम्

अथ तयोरनुष्ठानप्रकारः सामान्यतो निरूप्यते । तत्र पौर्णमास्यां यजमानः प्रातर्विहितनित्यक्रियः प्रातरग्निहोत्रं हुत्वा आहवनीयदक्षिणाग्नी अग्निहोत्रानुष्ठानार्थं प्रज्वालितौ कुण्डाभ्यां निष्कास्य, पुनर्गार्हपत्यात् तावग्नी दर्शपूर्णमासार्थं प्रणीय, प्रज्वलय्य त्रिष्वप्यग्निष्वन्वाधानं कुर्यात् । प्रणयनं नाम गार्हपत्यकुण्डादग्निमुद्धृत्य [क]कुण्डान्तरे स्थापनम् । अन्वाधानं नाम अग्निषु काष्ठानां यज्ञियानां समन्त्रकमाधानम् । आधानमत्र निक्षेपणमात्रमग्नेः प्रदीपनार्थम् । ततो यजमानो [ख]वपनं कुर्यात् । ततः स्नानाद्यनन्तरं प्राचीमुदीचीं वा दिशं गत्वा करिष्यमाणयज्ञार्थान् कुशान् दर्भान् वा समन्त्रकलवनाद्यनुष्ठानपूर्वकमाहृत्य गार्हपत्यगृहे आहवनीयगृहे वा उपरि छदिरादौ निदध्यात् । कुशमुष्टयोऽयुग्मसङ्ख्याकाः (त्रयः, पञ्च, सप्त, नव इत्ययुग्मसङ्ख्या) परिमिता आनेतव्याः । तत्र प्रथमो मुष्टिः प्रस्तर इत्युच्यते । तैः सह वेद्यास्तरणार्था अपि दर्भा आनेतव्याः । तदानीमेव चेध्मकाष्ठान्यप्येकविंशतिरार्द्राणि शुष्काणि वा त्वग्युक्तान्याहर्तव्यानि । तत्र पञ्चदश सामिधेन्यर्थम् । तिस्रः परिध्यर्थे । द्वे आघारसमिधौ । एका अनुयाजार्था समिदिति विभागः । एतावत्पर्यन्तं पौर्णमासीदिनकृत्यम् । रात्रौ यजमानः स्वयमेव अग्निहोत्रमनुष्ठाय, [ग]आरण्यकधान्यानि भुक्त्वा गार्हपत्यगृहे, आहवनीयगृहे वा [घ]भूमौ शयीत । जागरणं कुर्याद्वा ॥

---

क. कुण्डानां पञ्चभूसंस्कारान् कृत्वैव अग्निस्थापनमिति देवयाज्ञिकप्रभृतयः पद्धतिकाराः । ते च संस्काराः—कुण्डस्य परिसमूहनम्, गोमयेनोपलेपनम्, प्रागुदगायतानां तिसृणां तिसृणां रेखाणां करणम्, कुण्डात् पांसूनामुद्धरणम्, प्रोक्षणमिति ।

ख. वपनमिदं कृताकृतं मन्यन्ते बहवो याज्ञिकाः ।

ग. ग्राम्येभ्य उपवसति, आरण्यानश्नाति, न तस्य सायमश्नीयात् येन प्रातर्यक्ष्यमाणस्स्यात् (आप. श्रौ. ४. ३. १०) इति वचनात् यज्जातीयेन हविषा यक्ष्यति तज्जातीयं हविः पूर्वदिने नाश्नीयात् । माषमांसे च सर्वथा वर्जयेत् । ग्राम्या ओषधयश्च—तिलाः, माषाः, व्रीहयः, यवाः, प्रियङ्गवः, अणवः, गोधूमा इति सप्त ग्राम्या ओषधयः । वेणुतण्डुलाः, श्यामाकाः, नीवाराः, अरण्यतिलाः, अरण्यगोधूमाः, अरण्यमर्कटकाः, कुलुत्था इति सप्तारण्याः ।

See. आप. श्रौ. १६. १९. १३, १४.

घ. खट्वादीनामुपरि शयनं निषिध्यते । न तु भूमेरुपर्यास्तरणमपि ।

## कृष्णप्रतिपद्दिनकृत्यम्

श्वोभूते प्रातरुत्थाय नैत्यकं कर्म कृत्वा कृताग्निहोत्रः कर्म आरभेत । तत्र पौर्णमास्यां सूर्योदयादनन्तरं कर्मारम्भः । अमावास्यायां तूदयात् प्रागिति विशेषः । एवं कर्मारभ्य, अध्वर्युः हस्ताववनिज्य, आस्तरणार्थमानीतैरुलपाख्यैस्तृणविशेषैर्वेदिमास्तीर्य, आहवनीयस्य दक्षिण-भागे ब्रह्मयजमानयोरासने परिकल्पयेत् । तत आहवनीयस्योत्तरतो निकटदेशे कुशानास्तीर्य, तदुपरि यज्ञार्हाणि पात्राणि अधोबिलानि (अधोमुखानि) स्थापयेत् । तानि च—स्रुवः, जुहूः, उपभृत्, ध्रुवा, वेदः, पात्री, आज्य-स्थाली, प्राशित्रहरणम्, इडापात्रम्, प्रणीताप्रणयनम् इति दश । एवं गार्हपत्याग्नेरुत्तरतो दर्भान् प्रसार्य तदुपरि पूर्ववदेव अधोमुखानि पात्राणि स्थापयेत् । तानि च—स्फ्यः, कपालान्येकविंशतिः, अग्निहोत्रहवणी, शूर्पम्, कृष्णाजिनम्, शम्या, उलूखलम्, मुसलम्, दृषत्, उपला इति दश । एतेषां पात्राणामुत्तरदेशे [क]योक्त्रम्, मदन्ती, मेक्षणम्, वेदाग्राणि, अन्वाहार्यस्थाली, अश्मा, उपवेषः, पिष्टलेपपात्रम्, फलीकरणपात्रम् इति एतानि स्थापयेत् ॥

ततोऽध्वर्युर्वेद्या उत्तरत उपविश्य, ब्रह्माणं वृणुयात् । वृतो ब्रह्मा वेदेर्दक्षिणदेशं गत्वा आहवनीयस्य दक्षिणत उपविशेत् । ब्रह्मणः पश्चाद्भागे वेदेर्दक्षिणत एव यजमान उपविशेत् । ततोऽध्वर्युः गार्हपत्या-ग्नेरुत्तरदेश उपविश्य चमसाख्यं चतुष्कोणं दारवं पात्रं जलेन पूरयित्वा, तदाहवनीयस्योत्तरदेशं प्रति नीत्वा, तत्रैव दर्भाणामुपरि स्थापयेत् । तदेतत् अपां प्रणयनमित्युच्यते ॥

### हविर्निर्वापः

ततोऽग्निहोत्रहवणीं शूर्पं च हस्ते गृहीत्वा ते आहवनीये प्रतितप्य, वेदेरुत्तरत आनीय पूर्वमेव अवस्थापितस्य व्रीहिभिः यवैर्वा पूर्णस्य शकटस्य समीपं गत्वा, शकटमारुह्य, धान्यस्योपरि प्रसारितमाच्छादन-

---

क. यजमानपत्न्याः कट्यां बन्धनाय मुञ्जतृणनिर्मिता रज्जुर्योक्त्रम् । तप्ता आपो मदन्त्यः । पिष्टानां जलेन सह मिश्रणायोपयोक्तव्यं काष्ठनिर्मितं पात्रं मेक्षणम् । वेदो दर्भमुष्टिविशेषः । ततः परिवासितानि तदग्राणि वेदाग्राणि । ऋत्विग्भ्यो दक्षिणारूपेण देय ओदनः अन्वाहार्यः । तत्पाकार्था स्थाली अन्वाहार्यस्थाली । पिष्टसयवनकाले पात्र्यां संलग्नः पिष्टांश पिष्टलेपः । तद्रक्षणार्थं पात्रं पिष्टलेपपात्रम्, द्वितीयावहननकाले निस्सृताः सूक्ष्मास्तण्डुलत्वचः फलीकरणानि । तदर्थं पात्रम् ।

मपसार्य, धान्यगतं तृणादिकमपास्य, दक्षिणहस्तेन शकटस्थान् व्रीहीन् यवान् वा मुष्टिना गृहीत्वा, यागीयतत्तद्देवतानामनिर्देशपूर्वकं तानग्निहोत्रहवण्यां निक्षिप्य, अग्निहोत्रहवणीतः शूर्पे प्रक्षिपेत् । एवं वारचतुष्टयं कर्तव्यम् । तदिदं शकटस्थहविषः मुष्टिना पृथक् पात्रे करणं हविर्निर्वाप इत्युच्यते । एवमेकस्यै देवतायै हविर्निरूप्य पुनर्देवतान्तरार्थं तथैव निर्वपेत् । तत्र पौर्णमास्यां प्रथममग्नये निर्वापः, ततोऽग्नीषोमाभ्यामिति ध्येयम् । निर्वापकाले पात्रीतो बहिःपतितान् व्रीह्यादीनभिमन्त्र्य हस्तगतं शूर्पं सहविष्कम् आहवनीयसमीपे स्थापयेत् । ततस्तान् संस्कृताभिः प्रोक्षणीसंज्ञकाभिरद्भिः त्रिः प्रोक्षेत् । प्रोक्षणकालेऽपि निर्वापवत् तत्तद्देवतानाम निर्दिशेत् । ततः पूर्वं स्थापितानि न्यञ्चि पात्राणि पर्यावृत्य, ऊर्ध्वमुखानि कृत्वा पवित्रयुक्तेन पाणिना तानि त्रिः प्रोक्षेत् ॥

## अवहननपेषणे

ततः कृष्णाजिनं गृहीत्वा, उत्करे त्रिरवधूय, तत्रैव तदास्तीर्य तदनुत्सृजन् तदुपर्युलूखलं प्रतिष्ठाप्य तत्र निरुप्तं हविरेकीकृत्य आवपेत् । ततो मुसलमादायावहननं कुर्वन्नध्वर्युः अवहनने सहायार्थम् अन्यं कंचन पुरुषं यजमानपत्नीं वा आहूय तेन तया वा साकमवहन्याद्धविः । अवहतांस्तण्डुलान् तुषेभ्यः फलीकुर्यात् । फलीकरणं नाम तुषविमोकार्थं सकृदवहतानां तण्डुलानामुपरिगतकणापाकरणाय [क]पुनरवहननम् । ततः कृष्णाजिनमास्तीर्य तदुपरि शम्यां निधाय, तदुपरि च दृषदमत्याधाय, तत्र सुप्रक्षालितान् तण्डुलान् निक्षिप्य, उपलया तान् पिंष्यात् । पिष्टानि चूर्णानि कृष्णाजिने प्रस्कन्दयेत् । ततो हविः(पुरोडाश)श्रपणार्थं गार्हपत्यस्य आहवनीयस्य वा पश्चिमदेशे कपालान्युपदधाति । आग्नेयस्य पुरोडाशस्याष्टौ । अग्नीषोमीयस्यैकादश कपालानि । तदुपधानप्रकारश्च अन्ते चित्ररूपेण दर्शितः ॥

## हविःश्रपणम्

एवमुपधाय कपालानि तदुपरि वेदाख्येन दर्भमुष्टिना अङ्गारानध्यूह्य पिष्टसंयवनार्थमपां [ख]सन्तापनं कृत्वा, प्रक्षालितायां पात्र्यां

---

क. तण्डुलानामुज्ज्वलीकरणायेदं द्वितीयमवहननम् ।

ख. अत्र, आमपिष्टानामेवोष्णजलेन संयोजनम्, ततः पिण्डं कृत्वा कपालोपरि निधाय श्रपणं च सूत्रकारैरुक्तम्, तथापि सौकर्याय पिष्टानि प्रथमं भर्जयित्वा, ततस्तानि उष्णजलेन संयोज्य, पिण्डं कुर्वन्ति याज्ञिकाः ।

पिष्टान्यारोप्य संयौति[क]। संयुत्य च पिण्डद्वयं कृत्वा, एकमग्नये, एकमग्नीषोमाभ्यां च निर्दिश्य, तत्तदर्थं गार्हपत्यस्य आहवनीयस्य वा पश्चादुपहितानां कपालानामुपरि तं तं पिण्डं निधाय, उल्मुकैः पुरोडाशौ प्रतितप्य, ज्वलद्भिर्दर्भैरभितः प्रज्वल्य, सुपक्वौ तौ कुर्वन् भस्मना आच्छादयेत्। तावेव पुरोडाशौ। ततस्संयवनोपयुक्तां पात्रीं प्रक्षाल्य, तज्जलं वेद्यां कृतासु तिसृषु रेखासु निनयेत्। तत्र एकतः, द्वितः, त्रित इति क्रमेण देवताः॥

## वेदिनिर्माणम्, आज्यग्रहणादिकं च

ततः स्फ्यमादाय, तेन वेदिनिर्माणार्थां भूमिं खात्वा, तत्रत्यं तृणादिकमपास्य, उत्करे क्षिप्त्वा, उत्करतः शुद्धान् पांसूनादाय, वेद्यामोप्य वेदिं निर्मायात्। तस्याः स्वरूपमन्ते दर्शितम्। ततस्तां यज्ञार्थं परिगृह्य, प्रोक्षण्याद्यासादनार्थं प्रैषमग्नीधे दत्त्वा, आहवनीयस्योत्तरत इध्मं दर्भांश्च सादयित्वा दर्भैर्जुह्वादिपात्राणि सम्मृज्यात्। तत्र स्रुवं, जुहूं, उपभृतं, ध्रुवां, प्राशित्रहरणं च प्रतितप्य क्रमेण वेदाग्रैस्सम्मृज्य, पुनः प्रतितप्य, प्रोक्ष्य, वेद्यां दर्भाणामुपरि सादयित्वा, वेदाग्राणि पात्रसम्मार्जनोपयुक्तानि अग्नौ प्रहरेत्। तत आग्नीध्रो योक्त्रेण पत्नीं [ख]सन्नह्यति। ततस्सा गार्हपत्याग्निं देवपत्नीश्चोपस्थाय तद्देशादपक्रम्य, किञ्चिदिव दक्षिणत उदङ्मुखी उपविशेत्। ततोऽध्वर्युः सर्पिर्धान्याः तत्र पूर्वं स्थापिताया आज्यं गृहीत्वा, आज्यस्थालीं प्रपूर्य तां दक्षिणाग्नौ गार्हपत्ये च क्रमशोऽधिश्रित्य, पत्न्या हस्ते दद्यात्। सा तदाज्यं निमीलिताक्षी सत्येव पूर्वमवलोक्य, ततो यथावदीक्षित्वा वेद्यां निक्षिपेत्॥

## आज्यग्रहणम्

ततोऽध्वर्युर्यजमानश्च तथैव आज्यमवेक्षेयाताम्। तत्र आज्यस्थाल्या आज्यं स्रुवेण गृहीत्वा जुह्वादीनां पूरणम्। तदेव आज्यग्रहणमित्युच्यते। तदित्थम्—प्रथमं जुहूमाज्यस्थाल्या बिलेन समं गृहीत्वा जुह्वां स्रुवेण आज्यस्थालीतो वारचतुष्टयमाज्यं क्षिपेत्। एवमुपभृत्यष्टवारम्। ध्रुवायां वारचतुष्टयम्। एवमाज्येन ताः स्रुचः पूरयित्वा अन्तर्वेदि हविस्समीपे स्थापयेत्। ततः प्रोक्षणार्थं सम्भृता अपः (प्रोक्षणीः)

क. संयवनं जलेन मिश्रीकरणम्।

ख. कट्यां बन्धनम्।

अभिमन्त्र्य ब्रह्माणमामन्त्र्य (पृष्ट्वा) ततो लब्धानुज्ञः इध्मं विस्रस्य ताभिरद्भिः तं त्रिः प्रोक्ष्य अन्तर्वेद्यासादितान् दर्भानपि त्रिः प्रोक्ष्य वेदिं च त्रिः प्रोक्षेत्। प्रोक्षणीशेषं वेदेर्दक्षिणस्याः श्रोणेः उत्तरश्रोणिपर्यन्तं सन्ततधारया स्रावयेत्। तत्र पितरो देवता ॥

## वेदिस्तरणम्, पात्रसादनं च

ततो दर्भमुष्टीनां सहबद्धानां ग्रन्थिं विस्रस्य ततः प्रस्तराख्यं प्रथमं मुष्टिमादाय तं यजमानाय प्रयच्छेत्। यजमानो ब्रह्मणे प्रयच्छेत्। ब्रह्मा प्रस्तरं धारयेत्। अथ वा यजमान एव धारयन्नासीत। ततो दर्भैः वेदेः पश्चिमभागमारभ्य आहवनीयस्य पश्चिमभागं यावत् त्रिभिः पञ्चभिर्वा धातुभिः[क] वेदिं स्तृणुयात्। यथा वेदेर्भूभागो न दृश्येत तथा स्तरितव्यम्। तत अध्वर्युः ब्रह्मणो हस्तात् प्रस्तरमादाय प्रस्तरपाणिरेव सन् परिधीनाहवनीयस्य [ख]पश्चिम-दक्षिण-उत्तरभागेषु क्रमशः परिदध्यात्। ततः आहवनीयमभिमन्त्र्य प्रज्वलय्य आघारसमिधौ गृहीत्वा समिद्धस्तः मध्यमपरिधिं स्पृष्ट्वा ते समिधौ अग्नेर्मध्ये ऊर्ध्वाग्रे स्थापयेत्। ततो वेदेरास्तीर्णबर्हिष उपरि तिरश्चीनावुत्तराग्रौ द्वौ दर्भौ (विधृतिसंज्ञकौ) निधाय तदुपरि प्रागग्रं प्रस्तरं विस्रस्य स्तृणुयात्। तदुपरि च मन्त्रेण जुहूमुपभृतं ध्रुवां स्रुवमाज्यस्थालीं च सादयेत्। ततः सादितानि पात्राण्यभिमन्त्र्य पुरोडाशयोरुपर्यध्यूढानङ्गारानपोह्य तावभिमन्त्र्य आज्यस्थालीस्थमाज्यं स्रुवेण गृहीत्वा समन्त्रकमाग्नेयं पुरोडाशं तूष्णीं चाग्नीषोमीयमभिघार्य पात्र्यामुपस्तीर्य[ग] तत्र पुरोडाशौ स्थापयित्वा अभिघारयेत्। तच्च संस्कारत्वात् पुरोडाशद्वयेऽपि पृथक्कार्यम्। ततः व्रीहिमयं समन्त्रकं यवमयश्चेत्तं तूष्णीं पुरोडाशद्वयं पात्र्यां स्थापयेत्। स्रुवेण आज्यस्पृष्टेन कपालानि प्रमृज्य तेनैव पुरोडाशावञ्जीत। ततस्तावभिमृश्य वेद्यन्तान् परिस्तीर्य होतुरुपवेशनार्थं वेदेर्वायव्यकोणे स्थानं परिकल्प्य सामिधेनीभ्यः प्रतिपद्येत ॥

---

क. धातवः शलाकाः। त्रिवारमावृत्ताभिर्दर्भशलाकाभिर्वेदिं स्तृणुयादित्यर्थः।

ख. पश्चिमभागे उदगग्रः दक्षिणोत्तरभागयोः प्रागग्रौ चेति तिसृषु दिक्षु परिधयो भवेयुः।

ग. पात्र्यां स्रुवेण घृतक्षेपणमुपस्तरणम्। पुरोडाशस्योपरि स्रुवेणैव घृतस्य क्षारणमभिघारणम्। इमे चोपस्तरणाभिघारणे सर्वेष्वेव चरुपुरोडाशादिषु कठिनद्रव्येषु हविष्षु कर्तव्ये।

## सामिधेनीकर्म

तत्र प्रथमं होतारं संप्रेष्य स्वोपवेशनार्थं कल्पिते आसने उपविष्टेन होत्रा सामिधेनीसंज्ञकानामृचां पाठे क्रियमाणे अध्वर्युराहवनीयपश्चिमदेशे प्राङ्मुख आसीन इध्मकाष्ठान्याहवनीये अभ्यादध्यात्। होत्रा पठ्यमानाया ऋचः अन्ते प्रणवोच्चारणकाल एव समिधामाधनं कर्तव्यम् । तत्र ब्राह्मणे सामिधेनीसंज्ञका ऋच एकादशैव आम्नाताः। तासां प्रथमाया अन्तिमायाश्च त्रिस्त्रिरावृत्त्या पञ्चदशसङ्ख्या संपादनीया। तत्र उपान्तिमाम् ऋचमन्तिमां वा होत्रा पठ्यमानां श्रुत्वा अध्वर्युः स्वहस्तस्थितासु समित्सु अनूयाजार्थमेकां समिधमवशेष्यावशिष्टानीध्मकाष्ठान्याहवनीये सहैवाभ्याधाय वेदेनाग्निं त्रिर्वीजयित्वा प्रज्वलय्य स्रुवेण ध्रुवात आज्यमादाय वेदेनोपयम्य आसीन एवोत्तरपरिधिसन्धिमारभ्याक्ष्णया[क] अविच्छिन्नामाज्यधारां स्रावयेत् । तत्र प्रजापतिर्देवता । तं च मनसैव ध्यायेत् । न वाचोच्चारयेत् । एवं यत्र यत्र प्रजापतेर्देवतात्वं तत्र मनसैव तस्य ध्यानम् । न वाचा तस्योच्चारणम्[ख] । ततोऽध्वर्युराज्यस्थाल्या आज्यं गृहीत्वा तेन ध्रुवां पूरयित्वा अग्नेः परिधीनां च संमार्गकरणाय अग्नीधे प्रैषं दत्त्वा तेन तेषां संमार्गे स्फ्येन क्रियमाणे दक्षिणेन हस्तेन जुहूं सव्येनोपभृतं चादाय दक्षिणपादं पूर्वं कृत्वा वेदिमतिलङ्घ्य दक्षिणदेशमागत्य आहवनीयस्य दक्षिणत

---

क. आहवनीयाग्नेर्वायव्यकोणादारभ्य आग्नेयकोणपर्यन्तमग्नेरूर्ध्वे संतताम् (अविच्छिन्नाम्) आज्यधारां स्रुवेण स्रावयेत् । अयं प्रथमाघार इत्युच्यते । एवं निर्ऋतिकोणादारभ्य ईशानकोणपर्यन्तं तथैव स्रावयेत् । अयं द्वितीयाघार उच्यते । एवमक्ष्णया करणमेव आपस्तम्बाचार्यमतम् तैत्तिरीयश्रुतिश्च तै. सं. २. ५. ११. ४. । See. आप. श्रौ. सू. १. १४. १. । तौ प्राञ्चावेव कर्तव्याविति केचित् ।

ख. कदाचित् वाङ्मनसयोः देवेभ्यो हव्यवहनविषये परस्परं कलहः समजनि। ते उभे अपि निर्णयाय प्रजापतिसमीपमगच्छताम्। प्रजापतिरुभयोर्विवादं श्रुत्वा निर्णयमकरोत्—यस्मान्मनसा चिन्तितमेव वाचा वक्तुं शक्यते तस्मान्मन एव श्रेष्ठम्। वाक् तु मनसो दूतीत्वमेवार्हति—इति । तच्छ्रुत्वा क्रुद्धा वाक् तमशपत्—'हे प्रजापते! यस्मात्त्वं मद्विरुद्धं निर्णयमदाः अतो नेतः परं त्वां वाचा मन्त्रमुच्चार्य जुह्वोतु इति । अत एव प्रजापतिदेवताके कर्मणि वाचा मन्त्रं नोच्चारयन्ति, किं तु मनसैव प्रजापतिं ध्यायन्तः तस्मै जुह्वतीति श्रुतिः See. । तै. सं. २. ५. ११. ४. एतच्छ्रुतिबलादेव प्रजापतेर्मन्त्राभाव उक्तः सर्वैरपि सूत्रकारैः ।

उदङ्मुखस्तिष्ठन् दक्षिणपरिधिसन्धिमारभ्य ईशानदिक्पर्यन्तं संततामाज्यधारां पूर्ववत् स्रावयेत् । अयं द्वितीय आघारः । अत्रेन्द्रो देवता ॥

प्रयाजाः

एवमाघारद्वयमनुष्ठाय जुहूमुपभृतं च परस्परमसंस्पर्शयन्नेव हस्ते धृत्वा यथागतं वेदेरुत्तरभागं प्रतिनिवृत्य, जुह्वा ध्रुवां द्विस्त्रिर्वा समज्य, ध्रुवाया आज्यमादाय जुहूं, जुह्वा आज्यमादाय ध्रुवां चाभिघार्य ध्रुवां प्रत्यभिघार्य वेदिमध्ये ते स्थापयित्वोद्गत्वा ब्रह्माणमामन्त्र्य प्रवरकथनाय आश्रावणं कुर्यात्—'आश्रावय' इति । तत आग्नीध्रेण 'अस्तु श्रौषट्' इति प्रत्याश्राविते अध्वर्युर्होतुरार्षेयं[क] ब्रूयात्—'भार्गव वैतहव्य' इत्यादि । ततो होत्रा यथावदनुष्ठीयमानेषु स्वकर्मसु 'घृतवतीमध्वर्यो स्रुचमास्यस्व' इति यदा मन्त्रैकदेशः पठ्यते तदा अध्वर्युर्जुहूपभृतावादाय वेदेर्दक्षिणदेशं गत्वा, आश्राव्य आग्नीध्रेण प्रत्याश्रावणे कृते प्रयाजार्थं होतारं प्रति 'समिधो यज' इत्यादिप्रैषं दद्यात् । तत्र पञ्च[ख] प्रयाजाः । प्रतिप्रयाजम् आश्रावण - प्रत्याश्रावण - प्रैषदान - याज्यापाठा भवन्ति । याज्याया अन्ते वषट्कार उक्ते आहवनीये होमा भवन्ति । तत्र आश्रावणमध्वर्युकर्तृकम् । प्रत्याश्रावणमाग्नीध्रकर्तृकम् । याज्यावषट्कारपाठो होतृकर्तृक इति विवेकः । 'आश्रावय' इत्याश्रावणम् । 'अस्तु श्रौषट्' इति प्रत्याश्रावणम् । 'यज'[ग] इति प्रैषः । 'ये यजामहे' इत्यारभ्य निर्दिष्टमन्त्रपाठो याज्यापाठः । 'वौषट्' इति वषट्कारः । आश्रावणप्रत्याश्रावणे अध्वर्युणा आग्नीध्रेण च तिष्ठद्भ्यामेव कर्तव्ये । यजतिचोदनाचोदितेषु स्थलेषु होमाश्च[घ] । एवं जुहूस्थेन आज्येन त्रीन् प्रयाजान् हुत्वा चतुर्थप्रयाजार्थमौपभृतस्याज्यार्धं जुह्वां समानीय तेन चतुर्थपञ्चमौ प्रयाजाविष्ट्वा जुह्वां किंचिदाज्यमवशेष्य तेन वेद्यामासादितौ पुरोडाशौ अभिघारयेत् । एवमेव सर्वत्र

क. होतृप्रवरे ये मन्त्रद्रष्टारः प्रवराध्यायपठिताः त्रयः ऋषयः तेषामत्र नामग्रहणं वत्यन्तशब्देन–'भृगुवद्वीतहव्यवत् सवेदोवत्' इति, 'भार्गव वैतहव्यसावेदस' इत्यादि वा । एतदेव आर्षेयवरणमित्युच्यते ।

ख. समित्, तनूनपात्, इट्, बर्हिः, स्वाहाकार इति पञ्चानां प्रयाजानां नामानि । देवता अपि ता एव चतुर्णाम् । पञ्चमस्य परं तेषु तेषु कर्मसु यक्ष्यमाणाः प्रधानदेवताः स्विष्टकृदाज्यभागप्रयाजानूयाजदेवता एव ।

ग. तत्र 'समिधो यज' इति प्रथमः प्रैषः । 'यज' इत्येवेतरे चत्वारः प्रैषाः ।

घ. See. कात्या. श्रौ. १. २. ५, ६, ७.

प्रयाजाज्यशेषेण यागीयप्रधानहवींष्यभिघारयेत् । ततः यथेतं प्रतिनिवृत्यायतने जुहूपभृतावासाद्य ध्रुवातः स्रुवेण आज्यमादाय तेन प्रस्तरमङ्क्त्वा आज्यभागार्थं होत्रे प्रैषं दत्त्वा तेन याज्यापुरोनुवाक्ययोरुक्तयोः सत्योः आहवनीयाग्नेरुत्तरार्धपूर्वार्धे अग्निदेवतायै पूर्वमाज्यभागं दक्षिणार्धपूर्वार्धे सोमदेवतायै अपरं च आज्यभागं जुहुयात् । तत्र स्रुवेण ध्रुवाया आज्यमादायैकां दोषनिर्घातार्थां व्रातपतीष्टिस्थानीयाम् आज्याहुतिमाहवनीये हुत्वा हस्तौ प्रक्षाल्य प्रधानयागाननुतिष्ठेत् ॥

## प्रधानयागानुष्ठानम्

तत्र आज्येन जुह्वामुपस्तीर्य आग्नेयस्य पुरोडाशस्य मध्यादङ्गुष्ठपर्वमात्रं तिर्यक्तया प्रथममवदाय ततः पूर्वार्धात् अनूचीनतया द्वितीयवारमवदाय जुह्वां क्षिप्त्वोपर्यभिघार्य, वेदिगतं शिष्टं पुरोडाशं प्रत्यभिघार्य होत्रे प्रैषं[क] दद्यात् । ततस्तेन पुरोनुवाक्यायामनूक्तायामध्वर्युर्वेदेर्दक्षिणदेशं गत्वा आश्रावणप्रत्याश्रावणे कृत्वा होतुर्वषट्कारान्ते हविरग्नौ जुहुयात् । तत्र वषट्कारोच्चारणकाले जुहूगतमाज्यं पूर्वं किञ्चिदग्नौ स्रावयित्वा ततः पुरोडाशखण्डं जुह्वैव अग्नौ प्रक्षिप्य तदुपरि जुह्वामवशिष्टमाज्यमवश्च्योतयेत् । एवमेव सर्वत्र चरुपुरोडाशादिष्वाहुतिक्रमः । ततः प्रत्याक्रम्य ध्रुवाया वारचतुष्टयं स्रुवेण आज्यं गृहीत्वा जुहूमापूर्य वेदेर्दक्षिणभागे आहवनीयस्य दक्षिणत उदङ्मुखस्तिष्ठन् द्वितीयमुपांशुयाजनामकं यागमनुतिष्ठेत् । तत्र आज्यं द्रव्यम् । विष्ण्वादयो[ख] देवताः । तत्र याज्यापुरोनुवाक्ययोरुपांश्वेव पाठः । पुनरुत्तरतो गत्वा जुहूमभिघार्य अग्नीषोमीयपुरोडाशादाग्नेयपुरोडाशवदवदाय दक्षिणातिक्रम्याग्नीषोमदेवताकं प्रैषादिकं सर्वमनुष्ठाय पुरोडाशखण्डमग्नीषोमाभ्यां जुहुयात् । अत्र एतावन्तः प्रधानयागाः ॥

---

क. 'अग्नयेऽनुब्रूहि' इति पुरोनुवाक्याप्रैषः । 'अग्निं यज' इति याज्याप्रैषः ।

ख. विष्णुः प्रजापतिः अग्नीषोमौ च देवतात्वे विकल्प्यन्ते । उपांशुयाजोऽयमापस्तम्बीयानां पौर्णमास्यामेव यष्टव्यः । बह्वृचबौधायनीयकातीयानां तु सोऽयममावास्यायामपि भवति तत्तत्सूत्रानुसारेण । See कात्या. श्रौ. सू. ३. ३. २४. आश्व. श्रौ. सू. १. ३. १२.

अत्र सर्वत्र यजमानः अग्नौ तत्तद्धविषः प्रक्षेपसमये मनसा तत्तद्देवतायै तत्तद्द्रव्यं[क] त्यजन् तदवबोधकं शब्दराशिं च 'अग्नय इदं न मम' 'इदमग्नये न मम' इत्यादिकं वा वाचोच्चारयेत् । ततोऽध्वर्युः प्रत्याक्रम्य वेदेरुत्तरतः उपविश्य स्रुवेण पार्वणं होमं जुहुयात् । तत्र पूर्णमासो देवता । अनन्तरं तत्रैवोपविष्टः सन् नारिष्ठसंज्ञकान् होमान् स्रुवेणैव जुहुयात्[ख] ॥

## स्विष्टकृद्यागः

ततः स्विष्टकृद्यागः । तदर्थं जुह्वामुपस्तीर्य पूर्वं हुतावशिष्टयोर्द्वयोः पुरोडाशयोरुत्तरार्धात् सकृत्सकृदवदाय होत्रे प्रैषं[ग] दत्त्वा अध्वर्युर्दक्षिणातिक्रम्य आश्रावणाद्यनन्तरमग्नये स्विष्टकृते जुहुयात् । होमोऽयमग्नावुत्तरार्धपूर्वार्धे कर्तव्यः । ततो यथेतं प्रत्याक्रम्य जुह्वामप आनीयान्तःपरिधि निनयेत् ॥

## इडाभक्षणादि

ततः प्राशित्र[घ]हरणपात्रमुपस्तीर्य हुतावशिष्टयोः पुरोडाशयोर्मस्तकं भङ्क्त्वा तस्माद्यवमात्रं व्रीहिप्रमाणमात्रं वा भागमवदाय तं सपात्रं ब्रह्मणे प्रयच्छेत् । स तं हस्तद्वयेन परिगृह्य वेदिमध्ये आस्तरणतृणान्यपोह्य तत्र सादयित्वा सादितं तमभिवीक्ष्याङ्गुष्ठानामिकाभ्यामङ्गुलिभ्यां तं भागमादाय दन्तैरसंस्पर्शयन् भक्षयति । तत आचम्येन्द्रियाणि संमृशति । प्राशित्रपात्रं प्रक्षाल्य पराचीनं निनयति । तत इडापात्रमवदायोपस्तीर्य सर्वेभ्यो हविर्भ्यो दक्षिणभागादिडामवदाय तां पात्रे निक्षिप्य द्विरभिघार्य होत्रे प्रयच्छेत् । ततो होतुर्दक्षिणत आसीनः साज्येन

---

क. अत्र त्यागो नाम तेषु तेषु द्रव्येषु स्वसम्बन्धनिवृत्तिपूर्वकं देवतासम्बन्धापादकः मानसव्यापारः । तदवबोधकः शब्दश्च 'इदमग्नये न मम' इत्यादिः कातीयानाम् । 'अग्नय इदं न मम' इतीतरेषाम् ।

ख. प्रधानयागानन्तरं स्विष्टकृद्यागात्पूर्वं क्रियमाणः पार्वणहोमः नारिष्ठहोमाश्च तैत्तिरीयाणामेव भवन्ति, नान्यशाखिनाम् । शाखान्तरे तद्विध्यदर्शनात् तन्मन्त्रपाठाभावाच्च ।

ग. 'अग्नये स्विष्टकृतेऽनुब्रूहि अग्निं स्विष्टकृतं यज' इति प्रैषस्वरूपम् ।

घ. ब्रह्मणे भक्षणार्थं दीयमानस्य हविर्भागस्य कस्यचित् प्राशित्रहरणमिति संज्ञा ।

स्रुवाग्रेण होतुः तर्जन्यङ्गुलिपर्वणी अभ्यज्य प्रथमम् इडामादाय होतुर्हस्ते निक्षिपेत् । द्वितीयं होता स्वयमेवावद्य स्वहस्ते निक्षिपेत् । ततो लेपादिडापात्रस्थात्तदभिघार्य होत्रा इडोपाह्वाने कृते पात्रस्थाया इडायाः किञ्चित्किञ्चिदवदाय होत्रे, ब्रह्मणे, अग्नीधे, यजमानाय च भागशो दत्त्वा तैस्सह अध्वर्युरिडां भक्षयेत् । तत आचम्यान्तर्वेदि मार्जयित्वा आग्नेयं पुरोडाशं गृहीत्वा तं वेद्यां दर्भेष्वासाद्य चतुर्धा विभज्य[क] इदं ब्रह्मणः, इदं होतुः, इदमध्वर्योः, इदमग्नीध इति यजमानेन विभक्तव्यादेशे कृतेऽध्वर्युराग्नीध्रस्य भागं द्विरुपस्तरणेन द्विरवदानेन द्विरभिघारणेन च षडवत्तमाग्नीध्रहस्त एव संपादयेत् । ततः सर्वे ऋत्विजः स्वं स्वं भागं भक्षयेयुः ॥

## ऋत्विग्दक्षिणा अनूयाजाश्च

तत्र ऋत्विग्दक्षिणार्थं दक्षिणाग्नौ पुरुषचतुष्टयभोजनपर्याप्तैः व्रीहितण्डुलैरोदनं[ख] पक्त्वोद्वास्य वेद्यामासाद्योत्तरभागे अवस्थितानृत्विजः दक्षिणत आगमनाय यजमानेन संप्रेषणे कृते तथा आगतेभ्यस्तेभ्यः अन्वाहार्याख्यं तमोदनं यथाभागं विभज्य दत्त्वा पुनस्तानुत्तरतः प्रैषपूर्वकं प्रहिणुयाद्यजमानः । ततो हविश्शेषानुद्वास्य अग्निपरिधि-संमार्गायाग्नीधे प्रैषं दत्त्वा अनूयाजार्थं ब्रह्माणमामन्त्रयेत । तेनानुज्ञातः अग्नीत् पूर्वमनूयाजार्थमवशेषितामेकां समिधमाहवनीय आधायाग्नीन् परिधींश्च सकृत् सकृत् संमृज्येध्मसन्नहनोपयुक्तां तृणमयीं रज्जुमद्भिः संमृज्य अग्नौ प्रास्येत् । तत उपभृत्यनूयाजार्थं पूर्वमवशेषितमाज्यं जुह्वामानीय जुहूपभृतावादाय दक्षिणातिक्रम्योदङ्मुखः प्रयाजवत् प्रैषादिषु कृतेषु

---

क. इद चतुर्धाकरणमाग्नेयपुरोडाशस्यैव, नाग्नीषोमीयादेः । विकृतिष्वपि आग्नेययागविकृतिभूतयागसम्बन्धिन एव तस्य तत्; नान्यविकृतिष्विति । यज्ञेषु सर्वत्र हविःशेषभक्षणं पुंसामेव दरीदृश्यते । न यजमानपत्न्या अपि स्त्रियाः कुत्रापि । सत्यपि कर्मसु तस्याः सहाधिकारे हविर्भक्षणेऽधिकाराभावे हेतुं नाभ्यूहितुं शक्नुमः ।

ख. तस्मिन्नेव काले दक्षिणाग्नौ अन्वाहार्यस्य पाकारम्भोऽभिमतः आपस्तम्बस्य महर्षेः । See आप. श्रौ. ३. ३. १२.

कात्यायनस्तु पूर्वमेव पाकारम्भं कृत्वा पक्वस्यौदनस्याग्नेरुद्वासनं परमिदानीमभिप्रैति । See कात्या. श्रौ. सू. ३. ४. २७-२९

त्रीननूयाजान्[क] वषट्कृते जुहुयात् । तत्र याज्याया आदौ "ये यजामहे" इति न वक्तव्यम् । केवलं याज्यां पठित्वा तदन्ते वषट्कुर्यादिति विशेषः । ततः प्रत्याक्रम्य आयतने जुहूपभृतौ सादयित्वा ते व्यूहेत् । व्यूहनं त्रिविधं संचालनम् । ततः प्रस्तरमुपादाय आज्यलिप्तेषु पात्रेषु तमञ्ज्यात् । तत्र जुह्वामग्रम्, उपभृति मध्यं, ध्रुवायां मूलं च प्रस्तरस्याञ्ज्यात् । एवं त्रिरङ्क्त्वा ततस्तृणमेकमपादाय पृथङ्निक्षिप्य दक्षिणोत्तराभ्यां पाणिभ्यां प्रस्तरं गृहीत्वा प्रस्तरमूलं जुह्वां प्रतिष्ठाप्य आश्रावणादिषु कृतेषु होतारं प्रति सूक्तवाकपठनाय प्रैषं[ख] दत्त्वा तेन सूक्तवाकानुवाके पठ्यमाने प्रस्तरमाहवनीये प्रहरेत् । प्रहरणं प्रक्षेपणम् । ततः पूर्वमपात्तं तृणमग्नौ प्रक्षिप्य तन्निर्दिश्य [ग]शंयुवाकाय होत्रे प्रैषं दत्त्वा तेन तस्मिन्ननूच्यमाने आहवनीये परिधीन् प्रहृत्य संस्रावसंज्ञकं होमं कुर्यात् । अत्रैव ऋत्विजः पूर्वं तेभ्यो दत्तान् पुरोडाशादि हविश्शेषं भक्षयेयुः ॥

## पत्नीसंयाजादिकम्

ततः अध्वर्युर्जुहूपभृत्स्रुवगतानाज्यलेपानुष्णेन वारिणा प्रक्षाल्य पात्राणि तान्यादाय गार्हपत्याग्नेः समीपं गच्छेत् । वेदं होता, स्फ्यमाज्यस्थालीमुदकमण्डलुं चाध्वर्युः गृहीत्वा तत्रैव गच्छेताम् । ततो गार्हपत्यस्य पश्चिमदेशे दक्षिणतोऽध्वर्युरुत्तराभिमुखः उत्तरत आग्नीध्रो दक्षिणाभिमुखो मध्ये होता पूर्वाभिमुखश्चेत्येवं प्रकारेणोपविश्योच्चैरुपांशुस्वरेण वा आज्यद्रव्येण पत्नीसंयाजाख्यान् कांश्चन होमान् कुर्युः । तत्र प्रैषाश्रावणप्रत्याश्रावणेषु पूर्ववदेव कृतेषु अध्वर्युर्गार्हपत्यस्योत्तरार्धे जुहुयात् । तत्र सोमः, त्वष्टा, देवपत्न्यः, राका, सिनीवाली, कुहूः, अग्निर्गृहपतिरिति देवताः । तत्र राकादीनां तिसृणां होमा नित्याः काम्याश्च । इतरेषां नित्या एव । तत्र सर्वत्रोद्देश-

---

क. तत्र देवं बर्हिः, देवो नराशंसः, देवोऽग्निः स्विष्टकृत् इति क्रमेण त्रयाणामनूयाजानां देवताः ।

ख. "इषिता दैव्या होतारो भद्रवाच्याय प्रेषितो मानुषः सूक्तवाकाय सूक्ता ब्रूहि" इति सूक्तवाकप्रैषः ।

ग. "स्वगा दैव्या होतृभ्यः स्वस्तिर्मानुषेभ्यः शंयुवाकाय शंयोर्ब्रूहि" इति शंयुवाकप्रैषः ।

त्यागो यजमानेन पत्न्या चेत्युभाभ्यां कर्तव्यः । एवं [क]हुतानुमन्त्रणमपि । ततः पुरोडाशादौ कृतेडाह्वानभक्षणादिवदाज्येडायामपि सर्वं कुर्यात् । ततः स्रुवेण संपत्नीयहोमः । ततो दक्षिणाग्नाविध्म[ख]प्रव्रश्चनान्याधाय जुह्वां चतुर्गृहीतमाज्यं गृहीत्वा तत्र फलीकरणानोप्य[ग] तेन जुहुयात् । ततः पूर्वगृहीत आज्ये पिष्टलेपान्[घ] प्रक्षिप्य तेन होमचतुष्टयं कुर्यात् । ततो होतरि वेदं विस्रस्य तदीयतृणैर्वेदिं पश्चिमत आरभ्य प्राचीनं यावदाहवनीयं समग्रां स्तृण्वाने सति पत्नी स्वकटितः योक्त्रं विमुच्य स्वाञ्जलौ स्थापयेत् । तदा तस्या अञ्जलौ जुहूगतमुदकमध्वर्युरासिञ्चेत् । सा तदुकं भूमौ विस्राव्यार्द्रेण हस्तेन स्वमुखं विमृज्योत्तिष्ठेत् । एतावत्पर्यन्तं पत्नीकर्म ॥

होतापि स्तरणावशिष्टानि वेदितृणानि भूमौ निधाय आहवनीये स्रुवेण हुत्वा संस्थाजपाख्येन मन्त्रेणोपस्थाय निस्सरेत् । एतदन्तं होतुः कर्म । ततोऽध्वर्युराहवनीयसमीपं गत्वा जुह्वा स्रुवेण वा बह्वीः प्रायश्चित्ताहुतीर्जुहोति । तदन्ते ध्रुवाया आज्यं गृहीत्वा समिष्टयजुःसंज्ञकं होमत्रयं कुर्यात् । तन्मध्य एव वेद्यामास्तीर्णानि सर्वाणि बर्हींष्यादाय आहवनीये प्रक्षिपेत् । ततो वेदिमध्ये प्रणीता अप आसाद्योत्करे उपवेषं निरस्य कपालानि पुरोडाशश्रपणार्थमुपहितानि पृथक्कृत्य सङ्ख्यायोद्वासयेत् । एतावदाध्वर्यवं कर्म ॥

### याजमानम्

यजमानस्तु यज्ञसंकल्पप्रभृति ब्रह्मचर्यादीन् नियमान् धारयेत् । दक्षिणार्थं द्रव्यं प्रकल्पयेत् । प्रधानकर्मणः फलम् । यद्यङ्गेष्वपि फलेच्छा

---

क. अत्र आदित आरभ्य आन्तं प्रधानहोमेष्वङ्गहोमेषु चाध्वर्युणा तत्तद्धोमानुष्ठानसमनन्तरमेव यजमानेन पठनीयतया केचन मन्त्रा विहिताः । ते अनुमन्त्रणमन्त्रा इत्युच्यन्ते । यथा—अग्नेरहं देवयज्ययान्नादो भूयासम्, सोमस्याहं देवयज्यया पशुमान् भूयासमिति ।

ख. येभ्यः पलाशादिकाष्ठेभ्यः इध्मकाष्ठानि छिन्नानि अग्रतः तेषामधस्तना भागा इध्मप्रव्रश्चनानीत्युच्यन्ते ।

ग. तण्डुलानां द्वितीयावहननकाले तेभ्यो निस्सृताः अतिसूक्ष्माः त्वचः फलीकरणानीत्युच्यन्ते । पिष्टलेपफलीकरणयोश्चतुर्गृहीते आज्ये विकल्पेन प्रक्षेपमिच्छति देवयाज्ञिकः । अत्र विश्वे देवा देवता ।

घ. पिष्टानां संयवनकाले योंऽशः पात्रे लिप्तः स पिष्टलेपः ।

तर्हि यत्र यत्र यादृशं फलं निर्दिष्टं तस्य तस्य कामना, आत्मगामि फलबोधकमन्त्राणां पठनं, संकल्पात् पूर्वमेव क्षुरकर्म, सर्वेष्वपि कर्मसु द्रव्यत्यागयुक्तेषु तत्तद्देवताभ्यो मनसा तत्तद्द्रव्यस्य त्यागः, यत्र यजमानं वाचयति तेषां सर्वेषां मन्त्राणां पठनं, यदा यदा अध्वर्य्वादिभिः प्रैषो दीयते तदनुरोधेनानुष्ठानं, क्वचित् यज्ञियानां हविषां विध्यनुरोधेनाभिमर्शनम्, अनुमन्त्रणमन्त्राणां सर्वेषां पाठः, तत्तद्धविर्भक्षणम् इत्यादिकं कृत्वा अन्ते यज्ञविमोकं कुर्यात् । इष्टिपश्वादौ अन्ते गोमतीजपं यज्ञसंचमे इति मन्त्रं जपित्वा यज्ञं विसृजेत् इत्येतदन्तं याजमानम् ॥

॥ इति पौर्णमासयागः ॥

## अथ दर्शयागे विशेषाः

तत्र आग्नेयपुरोडाशयागः ऐन्द्रो दधिद्रव्यको यागः ऐन्द्र एव च पयोद्रव्यको याग इति यागत्रयमित्युक्तम् । तत्र दधि पयश्च वक्ष्यमाणेन विधिना पृथक् पृथक् संपाद्य यागकाले उभौ संमेल्य सकृदेव द्वयोर्यागः क्रियते । अत एव दधिपयसोर्मिलितयोः सान्नाय्यमिति[क] संज्ञा याज्ञिकानाम् । तद्द्रव्यको यागः सान्नाय्ययागः । तत्र आग्नेयो यागः पौर्णमास्यां यथा कृतः तथैव सः तदङ्गानि च अमावास्यायामनुष्ठीयेरन् । आग्नेययागस्वरूपं तु पौर्णमासप्रकरणे सम्यगुक्तं तत एव अवगन्तव्यम् । सान्नाय्यसम्बन्धिनो ये विषयाः ते तदनुष्ठानप्रकारश्च परमत्र निरूप्यन्ते ॥

### वत्सापाकरणम्

अमावास्यायां प्रातः कृतस्नानसन्ध्यादिनित्यक्रियः प्रातरग्निहोत्रं हुत्वा तानग्नीन् परित्यज्य (कुण्डेभ्यो बहिर्निष्कास्य) पुनः गार्हपत्यात्

---

क. श्रुतौ दधियागस्वरूपं पयोयागस्वरूपं च पृथक् पृथगेव विहितम् । परं तयोरेकदेवताकत्वात् दधि पयश्च मेलयित्वा सकृदेवानुष्ठानं शास्त्रकारैर्विहितम् । सूत्रकारैश्च तदेवानुमोदितम् । तस्माद्दधिपयोयागयोः सहानुष्ठानेऽपि गणनायां द्वित्वमेव । अतो दर्शे त्रयो यागा इत्येव शास्त्रकाराः । सोमयाजिन एव च सान्नाय्ययागानुष्ठानेऽधिकार इत्येकं मतम् । तदा असोमयाजिना (हविर्याजिना) तयोः स्थाने ऐन्द्राग्नः पुरोडाशद्रव्यको यागः कर्तव्यतया विहितः । हविर्याजिनोऽपि सान्नाय्येऽधिकारोऽस्तीत्यपरम् ।

तूष्णीमग्नीन् प्रणीय पौर्णमासवत् तेष्वन्वाधानं कृत्वा [क]वत्सापाकरणार्थं शाखाहरणं कुर्यात् । तत्र विहारात् (यज्ञानुष्ठानस्थानात्) प्राचीं गत्वा शमीवृक्षस्य पलाशवृक्षस्य वा बहुपर्णां बह्वान्तरशाखामाहृत्य[ख] शाखां तया शाखया स्वगृहस्थितान् षड्गोवत्सान् स्वमातृभ्यः पृथक्कृत्य गाः चरणाय गोचरं प्रदेशं वनं वा प्रेषयेत् । तां च शाखामग्न्यगारे सुरक्षितामुपरि स्थापयेत् । ततो दर्भाहरणं कुर्यात् । तत्प्रकारः पौर्णमासयागवत् । ततोऽपराह्णे पिण्डपितृयज्ञोऽनुष्ठेयः । स चाग्रे वक्ष्यते । सायंकाले यथासुखं चरित्वा गृहमागतासु गोषु यजमानः स्वयमेव सायमग्निहोत्रं कुर्यात् । तच्च यवाग्वैव कर्तव्यम् ; न दध्यादिना । अग्निहोत्रावशिष्टां यवागूं दध्यातञ्चनार्थमवस्थापयेत् । ततोऽध्वर्युरग्नीन् परिस्तीर्य [ग]सान्नाय्यपात्राणि प्रक्षाल्य आहवनीयस्योत्तरतः आस्तृतेषु दर्भेषु तान्यधोमुखानि प्रयुज्य अग्निहोत्रहवण्यां जलमुत्पूय पात्राण्युपरिमुखानि कृत्वा, उत्पूतेन जलेन तानि प्रोक्ष्य दोहनकुम्भीं शाखापवित्रं पयःश्रपणकुम्भीमुपवेषं चाहवनीये निष्टप्य आहवनीयादङ्गारान् किंचिदिव बहिः कृत्वा तदुपरि श्रपणकुम्भीमधिश्रित्य तां परितः प्रताप्य तत्रैव स्थापयित्वा वाग्यतः यथाविधि यजमानस्य तिस्रो गाः [घ]दुग्ध्वा तत्पयः कुम्भ्यां (श्रपणार्थायां) निनयेत् । ततो वाग्विसर्जनं कुर्वन् तिस्रः ततोऽप्यधिका वा (यद्यधिका गावो यजमानगृहे दोहनयोग्याः स्युः) गाः मन्त्रं विना दुग्ध्वा तदपि दुग्धं प्रतप्तायां तस्यामेव कुम्भ्यां प्रक्षिप्य तत्पयः सुशृतं कुर्याद-

---

क. स्वस्वमात्रा सहावस्थितानां गोवत्सानां स्वमातृभ्यो वियोज्य पृथगवस्थापनं वत्सापाकरणम् ।

ख. इदं च शाखाहरणं यज्ञारम्भदिनात् पूर्वदिने द्वित्रेभ्यो दिनेभ्यः पूर्वं वा तूष्णीं कृत्वा शाखां गृहेऽवस्थापयन्ति । कर्मानुष्ठानदिने तत्काले मन्त्रपाठमात्रं कुर्वन्ति । तावतैव च कर्मसिद्धिं मन्यन्ते याज्ञिकाः ।

ग. एतेषां पात्राणां विवरणमन्ते कृतम् । तदवलोकनीयम् ।

घ. दोहनमिदमध्वर्युरेव कुर्यात् । अथ वा अन्यः कश्चिद्दुह्यात् । शूद्रस्तु परं सर्वथा न दुह्यादिति श्रुतिः, सोऽपि दुह्यादिति सूत्रकाराः आपस्तम्बादयः See आप. श्रौ. सू. १. १२. १५. शूद्रं पर्युदस्यति कात्यायनः See कात्या. श्रौ. सू. ४. २. २२.

विष्यन्दयन्[क]। शृते पयसि कुम्भीं प्राग्देशे उदग्देशे वोद्वास्य किञ्चिदि-वापगतौष्ण्यायां तस्यां लौकिकं [ख]दध्यासिच्यायस्पात्रेण दारुपात्रेण वा कुम्भ्याः मुखं पिधाय तामुपरि शिक्ये निदध्यात्। तदिदमातञ्चन-मित्युच्यते। ततो यजमानः कटाद्यास्तृतायां भूमौ शयीत जागृयाद्वा। एतावदमावास्यादिनकृत्यम्॥

## शुक्लप्रतिपद्दिनकृत्यम्

श्वोभूते सूर्योदयात्प्रागेवोत्थाय कृतस्नानादिरध्वर्युः कर्मारभेत। पूर्वदिनवद्वत्सापाकरणम्। पात्रसंसादनकाले दोहनोपयुक्तानि पात्राणि प्रयुञ्ज्यात्। पुरोडाशश्रपणाय कपालोपधानानन्तरं सायंदोहवत्प्रातर्दोहं कुर्यात्। हविःपर्यग्निकरणकाले सायं दोहस्य दध्नोऽपि पर्यग्निकरणम्। हविरभिमर्शनकाले[1] दोहयोरप्यभिमर्शनम्। हविरासादनकाले पुरोडाश-स्योत्तरतो दोहयोरासादनम्। अभिघारणकाले पुरोडाशाभिघारणानन्तरं दधिपयसोरभिघारणम्। प्रधानयागकाल आग्नेयेन पुरोडाशयागेनेष्ट्वा जुह्वामुपस्तीर्य सायं दोहाद्दध्नः स्रुवेण द्विरवदाय ततः प्रातर्दोहात्पयसः स्रुवेणैव जुह्वामेव दध्ना सहैव द्विरवदाय (एतद्वा विपरीतम्) उपर्य-भिघार्य आश्रावणप्रत्याश्रावणादि इन्द्राय महेन्द्राय वा कृत्वा

क. कुम्भीगतं पयः तापकाले तापाधिक्येन बहिरागत्य यथा न पतेत् तथाकरणमविष्यन्दनम्। तथा कुर्वन्।

ख. अत्र दध्ना सह (सायमग्निहोत्रावशिष्टा यवागूः दुग्धे प्रक्षेपणीया) व्रीहयः पूतीकाः (सोमसदृशा लताः) बदरीफलानि पलाशकाष्ठत्वचश्च विकल्प्यन्ते। बौधायनः परं दध्नैव आतञ्चनं विदधाति। नान्यद्रव्येण। अत्रापि दर्भाहरण-वद्याज्ञिकाः लौकिकमेव दधि पयश्च पूर्वमेव आहृत्य कर्मानुष्ठानकाले तदङ्गभूतमन्त्र-पाठमात्रं कुर्वते। एवं व्रीह्यवहननतण्डुलपेषणादावपि पूर्वसिद्धेष्वेव मन्त्रपाठमात्रं कुर्वन्ति। तत्र च प्रमाणतया सांप्रदायिकं श्लोकमुदाहरन्ति।

छिन्ने पिष्टे तथा लूने सान्नाय्ये मार्त्तिके तथा।
पश्चान्मन्त्राः प्रयोक्तव्या मन्त्रा यज्ञार्थसाधकाः॥ इति॥

१. अभिमर्शनं याजमानम्। एवमेव स्वकाले प्राप्तं तत्तदनुमन्त्रणम्—त्यागमन्त्रपठनान्वारम्भहुतानुमन्त्रणध्यानेडाभक्षणयजमानभागप्राशनजपविष्णुक्रमणोप-स्थानादिकं सर्वं तत्तत्काले यजमानो यथावदनुतिष्ठेत्। पत्न्यास्तु सर्वत्र सहभाव एव।

(सोमयाजिनः संवत्सरं यावदिन्द्रो देवता, तत ऊर्ध्वं महेन्द्रो देवता) वषट्कारान्ते जुहुयात् । द्वयोर्द्रव्ययोर्दधिपयसोः संमिश्रितत्वात् सकृदेव होम उद्देशत्यागश्च ॥

ततः पार्वणहोमोऽमावास्यादेवताकः । ततः स्विष्टकृद्यागकाले तदर्थं दधिपयसोरपि सकृत्सकृदवदानम् । इडावदानकाले पुरोडाशावदानानन्तरं दधिपयसोरप्यवदानम् । सूक्तवाकमन्त्रपठनकाले 'अग्निरिदं हविरजुषत' इत्यनन्तरम 'महेन्द्र इदं हविरजुषत' इति 'इन्द्र इदं हविरजुषत' इति वा होत्रा प्रयोक्तव्यम् । प्रस्तरस्याग्नौ प्रहरणकाले पलाशशाखया सह प्रहरणम् ॥

एतावन्त एवामावास्यायां विशेषाः । अन्यत्सर्वं पौर्णमासीवदनुष्ठेयमिति वेदितव्यम् ॥

दर्शश्च पूर्णमासश्च यस्य रूपं परात्मनः ।
तं वन्दे यज्ञतपसां भोक्तारमपराजितम् ॥

॥ इति दर्शपूर्णमासौ ॥

## यज्ञियपात्राणां द्रव्याणां च दार्शपौर्णमासिकानां स्वरूपं लक्षणं चोच्यते सुखावबोधाय—

१. स्रुवः—खादिरः, अङ्गुष्ठपर्ववृत्तगर्तः, पर्वावखातः, अरत्निपरिमाणः ।

२. स्फ्यः—खादिरः खड्गाकृतिः, अरत्निमात्रः ।

३. जुहूः—मूलदण्डा त्वक्तोबिला, हंसमुखसदृशैकप्रणालिकायुता प्रादेशार्धपुष्करा तावत्खाता, पलाशकाष्ठनिर्मिता ।

४. उपभृत्—मूलदण्डा त्वक्तोबिला हंसमुखसदृशैकप्रणालिकायुता प्रादेशार्धपुष्करा तावत्खाता, अश्वत्थकाष्ठनिर्मिता ।

५. ध्रुवा—त्वक्तोबिला हंसमुखसदृशैकप्रणालिकायुता प्रादेशार्धपुष्करा विकङ्कतवृक्षनिर्मिता ।

६. अग्निहोत्रहवणी—त्वक्तोबिला, हंसमुखसदृशैकप्रणालिकायुता प्रादेशार्धपुष्करा तावत्खाता वैकङ्कती ।

७. अग्निहोत्रस्रुवः—स्रुववत् हंसमुखसदृशैकप्रणालिकायुतो वैकङ्कतः ।

८. उलूखलम्—अर्थलक्षणं वरणकाष्ठनिर्मितम् ।

९. मुसलम्—अर्थलक्षणं वरणकाष्ठनिर्मितम् ।

खादिरं मुसलं कार्यं पालाशः स्यादुलूखलः ।
यद्वोभौ वारणौ कार्यौ तदभावेऽन्यवृक्षजौ ॥

१०. कूर्चः—बाहुमात्रः पीठाकारः ।

११. इडापात्री—अरत्निमात्री चतुरङ्गुलदण्डा मध्यसङ्गृहीता, न वा, चतुरङ्गुलपरिणाहवती ।

१२. पुरोडाशपात्री—प्रादेशमात्री समचतुरश्रा षडङ्गुलवृत्तखातवती ।

१३. शम्या—बाहुमात्री पद्मकोशवत् पृथुतीक्ष्णाग्रमुखा (गदावत्) ।

१४. उपवेषः—प्रादेशमात्रः पलाशशाखातः कृत्तः ।

१५. प्राशित्रहरणम्—गोकर्णाकृति ।

१६. शूर्पम्—वैणवं यथेच्छपरिमाणम् ।

१७. चमसः—त्र्यङ्गुलदण्डः चतुरङ्गुलोच्छ्रायः षडङ्गुलविस्तारः प्रादेशमात्रो वरणकाष्ठनिर्मितः । (अप्प्रणयनार्थः) ।

१८. योक्त्रम्—मुञ्जनिर्मितम् (पत्न्याः कट्यां बन्धनार्थम्) ।

१९. मदन्तीपात्रम्—पित्तलमयम्, संयवनार्थानामपामुष्णीकरणाय ।

२०. मेक्षणम्—वरणवृक्षनिर्मितं पिष्टसंयवनार्थमरत्निमात्रम् ।

२१. अन्वाहार्यस्थाली—पुरुषचतुष्टयभोजनपर्याप्तान्नपचनयोग्यं ताम्रं पैत्तलं वा पाकपात्रम् ।

२२. पिष्टलेपपात्रम्—वरणवृक्षनिर्मितम् ।

२३. फलीकरणपात्रम्—वरणवृक्षनिर्मितं प्रादेशमात्रम् ।

२४. शकटः—लौकिकशकटाकार एवार्थलक्षणः ।

२५. कपालानि—एकोनविंशतिः स्फुटितभाण्डावयवभूतानि वर्तुलानि, चतुरश्रार्धचतुरश्राणि वा ।

२६. इध्मकाष्ठानि—यज्ञियवृक्षकाष्ठानि चाग्नीन्धनार्थम् ।

२७. कुशाः—वेद्यास्तरणपवित्रकरणपरिस्तरणार्थाः ।

२८. अध्वर्युब्रह्मयजमानानामासनानि दर्भमयानि दारवाणि वा ।

२९. व्रीहयो यवा वा—पुरोडाशप्रकृतिभूताः ।
३०. आज्यम्—गव्यं माहिषम्, आजं वा ।
३१. यवागूः—अग्निहोत्रार्था आतञ्चनार्था च ।
३२. कृष्णाजिनम्—उलूखलस्याधस्तादास्तरणाय ।

सान्नाय्यपात्राणि—

१. कुम्भी—मृन्मयी पयश्श्रपणार्था अर्थलक्षणा ।
२. दोहनपात्रम्—अर्थलक्षणं दारुमयम् ।
३. अभिधानी—गोबन्धनी रज्जुः अर्थलक्षणा ।
४. निदाने—दोहनकाले गोपादबन्धनार्था वत्सबन्धनार्था च रज्जू ।
५. पिधानपात्रम्—कुम्भीमुखपिधानार्थम् अयसा निर्मितमर्थलक्षणम् ।
६. शिक्यम्—मुञ्जतृणनिर्मितमर्थलक्षणम् दधिपात्रनिक्षेपणार्थम् ।
७. यजमानभागदधिपयोनिक्षेपणार्थे यज्ञियवृक्षनिर्मिते द्वे पात्रे ।
८. पलाशशाखा—वत्सापाकरणार्था शमीशाखा वा तदर्था ।

॥ इति दार्शपौर्णमासिकानि द्रव्याणि पात्राणि च ॥

## पिण्डपितृयज्ञः[1]

पिण्डपितृयज्ञ इदानीं निरूप्यते—स च आहिताग्निना अमावास्यायामपराह्णात् परं सायङ्काले‌ऽनुष्ठेयः । स दर्शाङ्गमिति कात्यायनः । न दर्शाङ्गं स्वतन्त्रमिदममावास्याकालेऽनुष्ठेयं कर्मेति जैमिनिः (पू. मी. ४. ४. ८.) । अनङ्गत्वमेव तु युक्तम् । अन्यथा दर्शविकृतिष्वतिदेशेन प्राप्तिः केन वार्येत ॥

तदनुष्ठानप्रकार इत्थम्—अमावास्यायां सायङ्काले सङ्कल्पः । ततस्समूलं बर्हिराहृत्य परिस्तरणार्थान् कुशान् सकृच्छित्त्वा दक्षिणाग्निं परिस्तीर्य तद्दक्षिणतो दर्भानास्तीर्य तदुपरि पिण्डपितृयज्ञोपयुक्तानि पात्राणि सादयित्वा प्रोक्ष्य दक्षिणतो व्रीहिमच्छकटमवस्थाप्य ततो

१. पिण्डयुक्तः पितृयज्ञ इति विग्रहः । अत्र होमानन्तरं पितॄनुद्दिश्य पिण्डदानविधानात् तत्त्वम् ।

व्रीहीन् पितृभ्यो निरूप्य दक्षिणाग्नेः पश्चिमतः कृष्णाजिनमास्तीर्य तदुपर्युलूखलं प्रतिष्ठाप्य निरुप्तान् व्रीहीन् तत्र आवपेत् । ततो यजमानपत्नी तानवहत्य सकृत्फलीकृत्य सकृत्प्रक्षाल्य दक्षिणाग्नौ पचेत् । भक्तेषु यथा तण्डुलांशः किञ्चिदिवावशिष्टो भवेत् तथा पाकः कार्यः । ततो दक्षिणाग्नेराग्नेयकोणे स्फचेन रेखामाग्नेयाभिमुखीं कृत्वा तां सकृदाच्छिन्नैस्तृणैरास्तीर्य पक्वमन्नमभिघार्य तस्यां वेद्यामासाद्य ततो मेक्षणेन जुहूस्थानीयेन हविरवदाय सशेषं दक्षिणाग्नौ जुहुयात् । तत्र सोमः पितृपीतो देवता । तं शेषं पात्रान्तरे स्थापयित्वा पूर्ववत्पुनर्मेक्षणेन अवदाय दक्षिणाग्नावेव सशेषं जुहुयात् । अत्र यमोऽङ्गिरस्वान् पितृमान् देवता । ततश्शेषद्वयमेकीकृत्य मेक्षणेऽवधाय जुहुयात् । तत्स्विष्टकृत्स्थानीयं भवति । तत्र अग्निः कव्यवाहनो देवता । एतदन्तमाध्वर्यवम् ॥

इतः परं याजमानं कर्म । अथ यजमानः प्राचीनावीती दक्षिणाग्नेरेकमुल्मुकं धूमविशिष्टं सव्यहस्ते गृहीत्वा आग्नेयकोणे सकृदुल्लिख्य अवोक्ष्य उल्लिखितान्तस्थले तमुल्मुकं निक्षिप्य उल्लेखस्थाने त्रीनुदकाञ्जलीन् पितृपितामहप्रपितामहेभ्यो दत्त्वा तदुपरि त्रीन् पिण्डान् तेभ्य एव दत्त्वा मन्त्रेण पित्रादीन् त्रीनुपस्थाय स्थालीस्थं शेषमवघ्राय पुनः पूर्ववन्मार्जयित्वा, अञ्जनाभ्यञ्जनवासांसि पित्रादीनां कृते पिण्डस्योपरि दत्त्वा पितॄनुपस्थाय स्वस्थानं गमयित्वा मध्यमं पिण्डं स्वपत्न्यै प्रजाकामायै भक्षणाय दत्त्वा स्वयमप्येकं पिण्डं भक्षयित्वा अवशिष्टान् पात्रे निक्षिप्य कुशानग्नौ प्रक्षिप्य उल्मुकमपि दक्षिणाग्नावेव पुनः प्रत्यस्य पात्राणि प्रोक्ष्य गृह्णीयात् ॥

॥ इति पिण्डपितृयज्ञः ॥

## पिण्डपितृयज्ञौपयिकानि द्रव्याणि पात्राणि च

१. व्रीहयश्चर्वर्थाः ।
२. उदकं श्रपणाद्यर्थम् ।
३. आज्यं होमाद्यर्थम् ।
४. तिस्रः समिधः ।
५. सकृदाच्छिन्नाः कुशाः ।

६. शय्या (कशिपु) ।
७. उपबर्हणम् ।
८. अञ्जनम् (अक्ष्णोः) ।
९. अभ्यञ्जनार्थं तैलम् ।
१०. उदकुम्भः ।
११. परिहितवाससो दशा, अजलोम वा ।
(शय्यादीनि षट् पिण्डोपरि पितृभ्यो देयानि ।)
१२. स्फ्यः रेखाकरणाद्यर्थम् ।
१३. स्थाली हविःपाकार्था ।
१४. मेक्षणं होमाद्यर्थं दर्वीस्थानीयम् ।
१५. कृष्णाजिनं भूमावास्तरणार्थम् ।
१६. उलूखलम् } अवहननार्थम् ।
१७. मुसलम्
१८. आज्यस्थाली आज्यग्रहणार्था ।
१९. मृन्मयं पात्रं हविर्निर्वापार्थम् ।
२०. शूर्पं परापवनार्थम् ।
२१. शकटः हविराहरणार्थः ।

## निरूढपशुबन्धः

अथ निरूढपशुबन्धः । अयं पशुयागः आहिताग्निना प्रतिसंवत्सरं कार्यः । तत्र सकृत्, द्विर्वा, षड्वारं वा । यदि सकृत्, वर्षतौ; यदि द्विः, उत्तरायणदक्षिणायनयोरारम्भे; यदि षट्कृत्वः ऋतावृतौ । तत्राप्यमावास्यायां पूर्णिमायां वा अनुष्ठानम् । पशुयागस्यास्य निरूढपशुबन्ध इति संज्ञा याज्ञिकानाम् । आहिताग्निस्सन् संवत्सरे सकृदवश्यमिमं यागमनुतिष्ठेत् । अन्यथा प्रत्यवायी स्यात् । यावज्जीवं चैवमनुष्ठानम् । अस्य ब्राह्मणग्रन्थेषु कुत्रापि स्वातन्त्र्येण प्रयोगविधानं न दृश्यते ॥

सर्वेषां पशुयागानां प्रकृतिभूतोऽग्नीषोमीयः पशुयागः । स सोमयागाङ्गभूतस्तदङ्गमध्ये पठितः । तत्रैव च सर्वेषां पश्वङ्गानाम् आम्नानमस्ति । तत एव च धर्मा (अङ्गानि) निरूढपशुबन्धेऽस्मिन्नतिदेष्टव्याः । शास्त्रकाराणामाशयोऽप्येवमेव । परं सर्वेऽपि श्रौत- [illegible] : अविशेषेणेममेव पशुयागं साङ्गं निरूपयन्ति । एतस्मादेव

चाग्नीषोमीये धर्माननतिदिशन्ति । तत्र च कारणम्—हविर्यज्ञत्वेनास्य सोमाङ्गभूताग्नीषोमीयपशोः पूर्वमनुष्ठेयतया पूर्वानुष्ठेय एव सर्वाङ्गसाहित्येन निरूपणीय इति । तदनुसारेणैवास्माभिरपि साङ्गोपाङ्गोऽयमेव निरूप्यते ॥

अत्र पशुः छागः । सोऽपि न साक्षात् । किं तु वपाहृदयाद्यङ्गद्वारैव । देवता इन्द्राग्नी, सूर्यः, प्रजापतिर्वा । षट् ऋत्विजः—अध्वर्युः, प्रतिप्रस्थाता, होता, मैत्रावरुणः, (प्रशास्ता) ब्रह्मा, अग्नीच्च । तत्र प्रतिप्रस्थाता अध्वर्योरनन्तरस्तत्सहायभूतः । मैत्रावरुणो होतुः । इष्टिषु होमकाले पठनीयाः पुरोनुवाक्या याज्याश्च होत्रा एकेनैव पठ्येरन् । पशुयागे तु पुरोनुवाक्या मैत्रावरुणेन वक्तव्याः । तदर्थमेव तत्र तस्य वरणम् । याज्यास्तु होत्रा । प्रैषा अपि मैत्रावरुणेनैव । अग्रे सोमयागादौ अस्मिन्नेव कार्ये नियुज्यते सः ॥

तत्र पशुयागमारभमाणा आदावाग्नावैष्णवेष्टिमिष्टितन्त्रेणानुष्ठाय तत आहवनीये यूपाहुतिसंज्ञकामेकामाहुतिं[1] हुत्वा यत्र यूपार्हो वृक्षोऽस्ति तत्र अध्वर्युब्रह्मयजमानाः तक्षा च गच्छेयुः । गत्वा च साक्षादेव भूसम्बद्धं बहुपर्णं सुषिरादिदोषरहितं पलाशखदिरबिल्वरोहितै[2]कानामन्यतमं वृक्षं तक्ष्णा छेदयित्वा स्वयं वा छित्त्वा छेदनस्थाने भूमिष्ठवृक्षखण्डे स्थाण्वाहुतिं हुत्वा यावत्परिमाण ऊर्ध्वबाहुर्यजमानो भवति तावत्परिमाणमवशेष्य, अवशिष्टमुपरिभागं छित्त्वा प्रास्येत् । स वृक्षखण्डो यूपशब्दाभिधेयो भवति । तं यज्ञभूमिदेशमानीय मूलतोऽरत्निमात्र[3]मुत्सृज्य तदुपर्यग्रपर्यन्तं तक्षकद्वारा तष्ट्वा अष्टकोणयुतं तं कुर्यात् । तक्षणे प्रथमपातिनं शकलं स्वर्वर्थं[4] गृह्णीयात् । छेदनकाले प्रथमपाती शकल एव स्वर्वर्थ इति कात्यायनः । यूपस्य अग्रभागे चषालं परिधापयेत् । तत्र यूपाग्रं तक्षणेन तनूकृत्योपरि त्र्यङ्गुलं यथा अवलोक्यते तथा परिशिष्य चषालः परिधापनीयः । ततो वेदिनिर्माणं कुर्यात् । तस्याः स्वरूपमन्ते प्रदर्शितम् ॥

---

१. यूपमुद्दिश्य गमिष्यता होतव्येति यूपाहुतिः ।

२. वटावान्तरजातीयो वृक्षः ।

३. चतुर्विंशत्यङ्गुलोऽरत्निः ।

४. पशोरञ्जनार्थः स्वरुः ।

## अग्निप्रणयनम्

वेद्याः पूर्वस्यां दिशि उत्तरवेदिं विमाय तन्मध्ये नाभिं करोति । तत्रैवाग्निः स्थाप्यते । ततस्सम्भारान् तन्मध्ये न्युप्य वेदिम् उत्तरवेदिं च प्रोक्ष्य आहवनीयादुत्तरवेद्यर्थमग्निं प्रणयेत् । तदित्थम्—आहवनीये भूयिष्ठं काष्ठं निक्षिप्य प्रज्वलय्य ज्वलन्तमग्निं वालुकापूर्णे कस्मिंश्चित्पात्रे गृहीत्वा अध्वर्युरुत्तरवेदिदेशं गत्वा (अध्वर्युप्रेषितेन होत्रा प्रणयनार्थास्वृक्षु पठ्यमानासु) तत्रोत्तरवेदिमध्यगताया नाभेरुपरि सम्भाराणामुपरि अग्निं निक्षिप्य पात्रगतासिकता अपि अग्नेरुत्तरभागे न्युप्य द्वादशगृहीतेन आज्येन जुह्वा पूर्णाहुतिं जुहुयात् । अतः परमुत्तरवेदिगतोऽग्निरेव आहवनीयपदवाच्यो भवति । अत आहवनीये कर्तव्यानि कर्माण्यस्मिन्नेवाग्नौ क्रियेरन् । यतोऽस्य प्रणयनं कृतं स गार्हपत्यो भवति । अर्थात्पूर्वाहवनीयो गार्हपत्यशब्दवाच्य इतः परं भवति । अतो गार्हपत्ये विहितानि कर्माण्यत्रैव कर्तव्यानि ॥

## पात्रासादनादि

ततः कुशसमिदाद्याहरणमरण्यादेः । इध्मकाष्ठानि त्रयोविंशति-सङ्ख्याकानि । काशाः प्रस्तरार्थाः । विधृत्यर्थे द्वे इक्षुशलाके । तत अग्न्योरुत्तरतः पाशुकपात्राणि अधोबिलानि प्रयोक्तव्यानि । तानि च—

| | | | |
|---|---|---|---|
| १. | स्फ्यः | ९. | छुरिका |
| २. | अग्निहोत्रहवणी | १०. | कुम्भी |
| ३. | वसाहोमहवनी | ११. | प्लक्षशाखा |
| ४. | जुहूद्वयम् | १२. | वपाश्रपणीद्वयम् |
| ५. | उपभृद्द्वयम् | १३. | औदुम्बरो दण्डः |
| ६. | पृषदाज्यधानी[1] | १४. | रशनाद्वयम् |
| ७. | आज्यस्थालीद्वयम् | १५. | स्रुवश्च । |
| ८. | हृदयशूलाख्यं कण्टकम् | | |

पात्राणाममीषां दर्शपूर्णमासवत्प्रोक्षणादिकं कृत्वा प्रयाजानूयाजाद्यर्थं जुह्वादिषु पात्रेषु आज्यं पृषदाज्यं च गृहीत्वा आज्यपूर्णानि पात्राणि वेद्यामासाद्य यूपनिखननार्थमवटं कुर्यात् ।

१. दध्ना संमिश्रितमाज्यं पृषदाज्यम् ।

अवटखातस्तथा भवेत् यथा यूपस्याधोभागोऽरत्निपरिमाण आच्छाद्येत। तस्मिन्नवटे यूपं पूर्वनिर्मितं निखाय आज्येनाङ्क्त्वा चषालमध्याज्याक्तमेव परिधाप्य कुशनिर्मितया त्रिसरया रज्ज्वा आवेष्ट्य यागीयं काणत्वादिदोषरहितम् उत्पन्नदन्तं पुमांसं पशुं (अजं) स्नापयित्वा तं यूपसमीपमानीय यागीयदेवताया उद्दिष्टायै उपाकुर्यात् । उपाकरणं नाम देवतामुद्दिश्य पशोरुरस्पर्शनपूर्वकं निर्देशः 'अग्नये त्वा (इन्द्राग्निभ्यां त्वा) जुष्टमुपाकरोमि' इत्यादिः। तत्र हस्ते कुशद्वयं प्लक्षशाखां च निक्षिप्य कर्तव्यम् । अत्र यूपाञ्जनोच्छ्रयणपरिव्याणेषु क्रियमाणेषु पूर्वं होत्रे प्रैषं दत्त्वा तेन तत्तत्संबन्धिनीष्वृक्षु अनूच्यमानास्वेव अध्वर्युस्तानि तानि कर्माणि कुर्यात्। कर्मस्वेषु क्रियमाणेषु यजमानो यूपं स्पृशन्नेव तत्समीपे तिष्ठेत्। ततोऽध्वर्योः प्रैषं श्रुत्वा होतरि अग्निमन्थनीया ऋचोऽनुब्रुवति सति अध्वर्युररणीतः अग्निं मथित्वा तमग्निमाहवनीये प्रक्षिप्य रशनया पशुं यूपे बध्नीयात्। अत्र अग्निमन्थनं मथितस्याग्नेराहवनीये प्रक्षेपश्च केवलादृष्टार्थः। होमाद्यर्थाग्नेः पूर्वमेव सत्त्वात् प्रयोजनान्तरादर्शनाच्च। ततस्तं पशुमद्भिः प्रोक्षणीभिः प्रोक्ष्य आज्यलिप्तेन स्रुवेण समज्य तत्रैव पशौ बद्धे तिष्ठति प्रयाजान् यजेत्। इष्टिषु प्रयाजानूयाजानां पुरोऽनुवाक्याः प्रैषा वा न सन्ति। केवलं याज्या एव। ताश्च होत्रैव पठनीयाः। पशुषु तु प्रैषास्सन्ति। ते सर्वाश्च पुरोऽनुवाक्या मैत्रावरुणाख्येनर्त्विजा पठनीयाः। स तिष्ठन् औदुम्बरं दण्डं ललाटसम्मितं यजमानदत्तं धारयन्नेव प्रैषादीन् पठेत्। पशुयागे चैकादश प्रयाजाः। तत्रास्मिन् समये दश प्रयाजाः, वपोद्धरणानन्तरमेकश्च प्रयाजा अनुष्ठेयाः। तेषु देवताः—

(१) समिधः
(२) तनूनपात् नराशंसो वा
(३) इडः
(४) बर्हिः
(५) द्वारो देव्यः
(६) दैव्यौ उषासानक्ता
(७) दैव्यौ होतारौ
(८) तिस्रो देव्यः
(९) त्वष्टा
(१०) वनस्पतिः
(११) स्वाहाकृतयश्च क्रमेण। द्रव्यमाज्यम्॥

## पशुसंज्ञपनवपाहोमादि

ततः पर्यग्निं कृत्वा आग्नीध्रः होत्रा अध्रिगुप्रैषाख्येषु मन्त्रेषूच्यमानेषु आहवनीयादुल्मुकमादाय पूर्वं गच्छेत् । तस्य पश्चाच्छमिता पशुं नयेत् । एवमुभयोरपि शामित्रदेशं गतयोः आग्नीध्रस्तत्रोल्मुकं निधाय प्रत्यावर्तेत । शमिता त्वावृते देशे पशुं प्रत्यक्शिरसमुदीचीनपादं निपात्य संज्ञपयेत् । ततस्संज्ञप्तहोमं प्रायश्चित्तहोमांश्च हुत्वा वपाश्रपण्यावादाय, अध्वर्युर्यजमानानुगतः पशुसमीपं गत्वा पश्वङ्गानि जलेन आप्याय्य पशोरुदरं दक्षिणपार्श्वे विशस्य (विदार्य) अन्तरामाशयमाच्छाद्य स्थितां श्वेतरक्तामतिमृदुलां तनीयसीं त्वक्सदृशीं वपामुत्कृत्य तां वपाश्रपण्यामेकस्यां प्रसार्य, अन्यया आच्छाद्य यजमानेन अन्वारब्धोऽध्वर्युराहवनीयसमीपमागत्य प्रतिप्रस्थात्रे वपायुते वपाश्रपण्यौ दद्यात् । ततस्स वपामलोहिनीं सुश्रृतां श्रपयित्वा वेद्यां पूर्वोपस्थापितप्लक्षशाखाया उपरि तामासाद्य अवशिष्टमेकादशं [क]प्रयाजमनुष्ठाय, आज्यभागौ चेष्ट्वा वपामादाय उपस्तृतायां जुह्वामखण्डितां तां निक्षिप्य, अभिघार्य, हिरण्यशकलानि प्रास्य, आश्रावणादिषु कृतेषु वपां समग्रामेवाध्वर्युराहवनीये जुहुयात् । इन्द्राग्नी, सूर्यः, प्रजापतिर्वा विकल्पेन देवता इत्युक्तम् । ततो वपाश्रपण्योराहवनीये प्रक्षेपः कार्यः । ततस्सर्वेषामृत्विजां पत्नीयजमानयोश्च चात्वाले हस्तप्रक्षालनम् ॥

ततस्तद्देवताकमेवैकं पशुपुरोडाशयागं कुर्यात् । तदनुष्ठानं पौर्णमासीगताग्नीषोमीयपुरोडाशवदेव । पुरोडाशसंबन्धिहविर्निर्वापकाल एव पशोर्हृदयादीन्यङ्गान्युत्कृत्य शामित्रेऽग्नौ पूर्वसज्जिते मृद्भाण्डे[३] पचेत् । पाककाले हविषामसाङ्कर्याय चिह्नं कृत्वैव पाकः कर्तव्यः । तानि चाङ्गानि—

---

क. अयमपि प्रयाज आज्येनैव कार्यः । वपयेति कथनं भ्रममूलकमेव ।

---

१. आहवनीयाज्ज्वलन्तमङ्गारमादाय तस्य पशोस्समन्तात् भ्रामणम् ।

२. घातमन्तरा प्राणसंरोधनादिना प्राणवियोजनं संज्ञपनम् ।

३. हृदयं परं शूलप्रोतं कृत्वा साक्षादेवाग्नौ तापयित्वा पचेत्; इतराणि भाण्डे ।

| | | | |
|---|---|---|---|
| (१) | हृदयम् | (५-६) | वृक्यौ (पार्श्वस्थौ पिण्डौ) |
| (२) | जिह्वा | (७) | सव्यं बाहुमूलम् |
| (३) | वक्षः | (८-९) | पार्श्वद्वयम् |
| (४) | यकृत् (कालखण्डाख्यं मृदुतरं मांसम्) | (१०) | दक्षिणा श्रोणिः |
| | | (११) | गुदस्य तृतीयोंऽशः ॥ |

इति । तेषां पाको यदा प्रचलति तदा ऋत्विजः पशुपुरोडाशयागमनुतिष्ठेयुः । तदीयामिडां पुरोडाशरूपां प्रतिप्रस्थातृवर्जं सर्वे ऋत्विजो यजमानसहिता भक्षयेयुश्च ॥

## हृदयाद्यङ्गयागः

तदनन्तरं पाकभाण्डात् पक्वान्यङ्गान्युद्धृत्य स्वधितिना (छुरिकया) छित्त्वा, अवदाय, जुह्वां[1] निक्षिप्य, आश्रावणादिषु कृतेषु आहवनीये जुहुयात् । अत्र हविषां जुह्वामवदानकाल एव पशुरसे यूषाख्ये मेदो[2] निधाय तेन जुहूभृतोः हविःपूर्णयोः मुखमाच्छादयेत् । तदैव प्रतिप्रस्थाता प्रधानयागीययाज्याया अर्धर्चपाठकाले वसाहोमहवन्यां गृहीतां वसामाहवनीये[3] जुहुयात् । तदनन्तरमेव हृदयाद्याहुतिरिति बोध्यम् । हृदयादीन्येकादशाङ्गानि जुहूस्थानि सकृदेव होतव्यानि ॥

ततो दर्शवत् नारिष्ठहोमान् हुत्वा पृषदाज्यस्थाल्यां पृषदाज्यं गृहीत्वा वनस्पतये (देवताविशेषाय) हुत्वा स्विष्टकृदर्थं पूर्वमेवोपभृत्यवदाय स्थापितान्यङ्गानि जुह्वां कृत्वा प्रैषाश्रावणाद्यनन्तरं स्विष्टकृतेऽग्नये हुत्वा इडां यथावदवदाय सर्वे ऋत्विजस्सयजमाना भक्षयेयुः ॥

---

१. तस्मिन्नेव काले स्विष्टकृदर्थमवदायोपभृति निक्षिपेत् ।

२. जीर्णपटसदृशं हृदयवेष्टनं मेदः ।

३. पाकभाण्डे स्थितस्स्नेहात्मको रसो वसा ।

## अनूयाजाद्यनुष्ठानम्

ततोऽनूयाजा एकादश अनुष्ठेयाः । तेषाम्—

१. देवं बर्हिः
२. देव्यो द्वारः
३. देव्यौ उषासानक्ता
४. देव्यौ जोष्ट्र्यौ
५. देव्यौ ऊर्जाहुत्यौ
६. दैव्यौ होतारौ
७. तिस्रो देव्यः
८. देवो नराशंसः
९. देवो वनस्पतिः
१०. देवं बर्हिः
११. देवो अग्निः स्विष्टकृत्

इति क्रमेण देवताः ।

पृषदाज्यं द्रव्यम् । अनूयाजानुष्ठानकाले प्रतिप्रस्थाता गुदकाण्डस्य तृतीयमंशं पूर्वमवशेषितमेकादशधा च्छित्त्वा शामित्रादग्निमादाय उत्तरस्यां वेदिश्रोण्यां स्थापयित्वा तस्मिन्नेकैकं गुदकाण्डखण्डं हस्तेन जुहुयात् । ततो यागार्थं पूर्वविशस्तस्य पशोः पुच्छमसिना च्छित्त्वा आदाय तेन पत्नी संयाजाननुतिष्ठेत् । तत्र प्राकृत्य एव देवताः । ततः प्रकृतितोऽतिदिष्टानामैष्टिकानां यथासम्भवमनुष्ठानमङ्गानाम् । ततो यजमानो यूपमुपस्थाय संस्थाजपं कृत्वा कर्म समापयेत् । पशुयागोऽयं दार्शिकपयोयागविकृतिभूतः । अतो धर्मान् तदीयानेव गृह्णीयात् ॥

॥ इति पशुयागो निरूढपशुबन्धाख्यः ॥

## पशुयागोपयुक्तानि द्रव्याणि पात्राणि च—

१. एकादश कपालानि आग्नावैष्णवेष्ट्यर्थम् ।
२. प्रोक्षणार्थाश्च व्रीहयो यवा वा आग्नावैष्णवेष्ट्यर्थम् ।
३. स्वधितिः (क्षुरः) यूपच्छेदनार्थः ।
४. यूपः पशुबन्धनार्थः ।
५. चषालः यूपाग्रपरिधापनार्थः ।
६. स्वरुः पश्वञ्जनार्थः ।
७. रशनाद्वयं पशुबन्धनार्थं यूपपरिव्याणार्थं च ।
८. ऐष्टिकानि सर्वाणि पात्राणि । तत्र द्वे द्वे जुहूपभृतौ ।
९. कुम्भी पश्वङ्गपचनार्था ।

१०. वपाश्रपण्यौ द्वे वपापाकार्थे ।
११. पृषदाज्यधानी अनूयाजार्थपृषदाज्यधारणार्थम् ।
१२. वसाहवनी वसाहोमार्थम् ।
१३. हृदयशूलं (कण्टकः) हृदयपाकार्थम् ।
१४. सिकताः उपयमनार्थाः ।
१५. अरणी अग्निमन्थनार्थे ।
१६. प्लक्षशाखा वेदेराच्छादनार्था पशूपाकरणार्था च ।
१७. मैत्रावरुणदण्डः औदुम्बरः मैत्रावरुणस्य धारणार्थः ।
१८. अभ्रिः यूपावटखननार्था ।
१९. मन्थिप्रमन्थिरज्जवः अग्निमन्थनार्थाः ।
२०. पशुः तत्र तत्र विहितश्छागादिः, आज्यं च यागार्थम् ।

## चातुर्मास्यानि

"अथ चातुर्मास्यानि निरूप्यन्ते । तानि द्विविधानि—स्वतन्त्राणि राजसूयान्तर्गतानि च । राजसूयमनुतिष्ठता क्षत्रियेणैव राज्ञा राजसूयप्रयोगमध्य एवानुष्ठेयानि राजसूयान्तर्गतानि । न ब्राह्मणवैश्ययोस्तत्राधिकारः । स्वतन्त्रेषु तेषु त्रैवर्णिकानामधिकारः । तानि चाग्निहोत्रदर्शपूर्णमासवन्नित्यानि प्रतिसंवत्सरमनुष्ठेयानि ॥

तत्र चत्वारि पर्वाणि—वैश्वदेवः, वरुणप्रघासाः, साकमेधाः, शुनशीरीयश्चेति । अत्र पर्वसु पौर्णमासीष्वनुष्ठेयत्वात् पर्वशब्देन ते यागा उच्यन्ते । इष्टिरूपेष्वत्र चत्वार एव ऋत्विजः । वरुणप्रघासेषु परं प्रतिप्रस्थाता एकोऽधिकः ॥

### वैश्वदेवपर्व

तत्र फाल्गुन्यां चैत्र्यां वा पूर्णिमायां वैश्वदेवपर्वणोऽनुष्ठानम् । फाल्गुन्यामेवेति कात्यायनः । तदनुष्ठास्यन् ततः पूर्वस्यां चतुर्दश्यामन्वारम्भणीयेष्टिं तत्स्थानापन्नां वैश्वानरपार्जन्येष्टिं वा अनुतिष्ठेत् ॥

इष्टिरियं कर्तुः कर्मारम्भयोग्यतासंपादिका । द्वादशकपालः पुरोडाशः चरुश्च द्रव्यम् । वैश्वानरः पर्जन्यश्च देवते । तामिष्टिकल्पेन अनुष्ठाय श्वोभूते वैश्वदेवपर्वानुष्ठानम् । तत्राष्टौ यागाः—आग्नेयः, सौम्यः, सावित्रः, सारस्वतः, पौष्णः, मारुतः, वैश्वदेवः, द्यावापृथिव्य इति ।

तत्र अष्टाकपालः पुरोडाशः, चरुः, द्वादशकपालः पुरोडाशः, चरुः, पिष्टकचरु, सप्तकपालः पुरोडाशः, आमिक्षा, एककपालः पुराडाश इति क्रमेण द्रव्याणि । अग्निः, सोमः, सविता, सरस्वती, पूषा, मरुतः, विश्वे देवाः, द्यावापृथिव्यौ इति च क्रमेण देवताः ॥

तत्र आमिक्षोत्पादनार्थं पर्वणः पूर्वस्मिन् दिनेऽन्वारम्भेष्ट्यनन्तरं सान्नाय्यवत् प्रातर्वत्सापाकरणादिकं सायंदोहनादिकमनुष्ठाय लौकिकेन दध्ना तत्पय आतञ्च्य निदध्यात् । चतुर्दश्यामेव, कुशसमिदाहरणादिकं कुर्यात् । ततः पूर्णिमायां प्रातरग्निहोत्रं हुत्वा दार्शिकेन प्रातर्दोहधर्मेण गा दुग्ध्वा, दुग्धं पय आहवनीये श्रपयित्वा अतितप्यमाने पयसि तस्मिन् पूर्वदिनसम्भृतं प्रभूतं दध्यासिञ्चेत् । तद्द्विधा संवर्तते—घनीभूतं द्रवीभूतं च । तत्र यद्घनीभूतं कठिनद्रव्यं सा आमिक्षा । यत् द्रवीभूतं तत् वाजिनम् । ततः पुरोडाशार्थं चर्वर्थं च व्रीहीन् तत्तद्देवतायै निरुप्य सहैव अवहत्य पुरोडाशीयांश्चर्वर्थांश्च तण्डुलान् पृथक्कृत्य पुरोडाशीयान् पिष्ट्वा पिष्टैः दर्शपूर्णमासवत् पुरोडाशान्निष्पादयेत् । भिन्नभिन्नपात्रेषु चरूंश्च श्रपयेत् । ततः प्रयाजार्थं जुह्वादिषु पात्रेष्वाज्यं गृहीत्वा अनूयाजार्थं पात्रान्तरे आज्यं दधि च सहैव गृह्णीयात् । तत्पृषदाज्यमित्युच्यते । अत्र नव प्रयाजाः । नव अनूयाजाः । एवम्, एककपालं पुरोडाशमपि तदर्थं सम्भृते आशयस्थाल्याख्ये पात्रे निक्षिप्य तत्पात्रं घृतेनापूरयेत् । यथा पुरोडाशस्य मस्तकः परं दृश्येत अन्योंऽशो घृतमग्नो भवेत्तथा पूरणीयम् । ततः प्रयाजाघाराज्यभागाद्यनन्तरम् आश्रावणादिषु कृतेषु आग्नेयादियागान् कुर्यात् । अत्र यागेभ्यः पूर्वं तदर्थं पक्वेषु वेद्यामासादितेषु पशुयाग इव अग्निं मथित्वा आहवनीये निक्षिपेत् । अनन्तरं प्रयाजाः । ततः प्रधानयागा इति बोध्यम् । प्रधानेषु देवताः पूर्वमुक्ताः । तत्र आग्नेयादीनां हविषामवदानक्रमेण होमः । एककपालस्य पुरोडाशस्य तु न अवदानादिकम् । किं तु यथा पात्रे स्थितस्तथैवापर्यावर्तयन् तदर्थनिर्मिताशिक्येन सहैव तं गृहीत्वाग्नौ प्रक्षिपेत् । पात्रस्थमाज्यं च अवश्च्योतयेत् । ततः चतुर्भिः मधुः, माधवः, शुक्रः, शुचिः इत्येवंरूपैः मासनामभिः एककपालपुरोडाशमभित आज्येन जुहुयात् । ततः स्विष्टकृदिडाभक्षणानूयाजादिषु परिधिप्रहरणान्तेषु प्रकृतिवदनुष्ठितेषु कर्मसु वाजिनपात्रं गृहीत्वा ततो वाजिनमुपरितः जुह्वां तथा स्रावयेत् यथा वाजिनं जुह्वतो बहिर्बर्हिष उपरि

विष्यन्देत् । ततस्तत् वाजिसंज्ञिकाभ्यो देवताभ्यो हुत्वा शेषभक्षणं ऋत्विजः सोमवत् उपाह्वानादिकं कृत्वा कुर्युः । अन्ये चेष्टिधर्मा यथावदत्र अनुष्ठेयाः । इष्ट्यन्ते वपनं यजमानस्य ॥

॥ इति वैश्वदेवपर्वसमाप्तिः ॥

## वरुणप्रघासपर्व

अथ द्वितीयं वरुणप्रघासपर्व । वैश्वदेवानुष्ठानानन्तरं मासचतुष्टय-मतिवाह्य, आषाढ्यां श्रावण्यां वा पूर्णिमायां वरुणप्रघासानुष्ठानं कुर्यात् । आषाढ्यामेवेति कात्यायनः । तत्र—




| | |
|---|---|
| १. आग्नेयः | ६. ऐन्द्राग्नः |
| २. सौम्यः | ७. मारुतः |
| ३. सावित्रः | ८. वारुणः |
| ४. सारस्वतः | ९. कायः |
| ५. पौष्णः | इति नव यागाः । |

उत्तरतो दक्षिणतश्चेति वेदिद्वयम् । गार्हपत्यो दक्षिणाग्निश्चैक एव । आहवनीयौ परं द्वौ तत्तद्वेद्यग्रभागयोः । दक्षिणस्यां वेदौ सप्तमो यागः प्रतिप्रस्थात्रा अनुष्ठीयते । अन्ये सर्वे यागा उत्तरस्यां वेद्यामध्वर्युणा कर्तव्याः । अङ्गानि तूभयत्र अनुष्ठातव्यानि प्रयाजादीनि । उत्तरस्यां समन्त्रकाणि, दक्षिणस्याममन्त्रकाणीति विशेषः । अतोऽत्र वरुणप्रघासेषु दक्षिणविहारार्थं प्रतिप्रस्थाता एकोऽधिक ऋत्विक् । तदर्थं पात्राण्यपि जुह्वादीनि पृथक् निर्मातव्यानि । तानि सुवर्णनिर्मितानि शमीकाष्ठनिर्मितानि वा भवेयुः । आमिक्षार्थं वैश्वदेवपर्ववत् पूर्वस्मिन् दिन एव सायंदोहधर्मानुष्ठानपूर्वकं दध्न आतञ्चनं कर्तव्यम् । यदि सद्यस्काला वरुणप्रघासा भवेयुः तदा पूर्णिमायाः प्रातरेव सर्वोऽपि व्यापारो भवेत् । लौकिकेन दध्ना आमिक्षोत्पादनम् । तत्र वेदिनिर्माणकाले दक्षिणत उत्तरतश्चेति गार्हपत्यस्याग्रे वेदिद्वयं निर्मायोत्तरस्यां वेद्याम् अन्तरे वोत्तरवेदिं तन्मध्ये नाभिं च निर्माय गार्हपत्यादग्निं प्रणीयोभयत्र वेद्योरग्निद्वयं निदध्यात् । तत्रोत्तरत्राध्वर्युः दक्षिणतः प्रतिप्रस्थाता च सर्वं कुर्याताम् । ततश्चरुपुरोडाशार्थं व्रीहीन् निरुप्य अवघातादिकं कृत्वा चर्वर्थान् पुरोडाशार्थांश्च तान् पृथक्कृत्य पेषणश्रपणादिकं यथावदध्वर्युः कुर्यात् ॥

तस्मिन्नेव समये प्रतिप्रस्थाता करम्भपात्रार्थं यवान् निरुप्य अतप्तानेव तानवहत्य पिष्ट्वा पिष्टानि पत्नीहस्ते दद्यात् । सा तानि जलेन संयुत्य गृहकर्मोपयुक्तपात्रसदृशानि अल्पकायानि पात्राणि कुर्यात् । तानि च सङ्ख्यया यजमानगृहगतजनसङ्ख्याया एकाधिकानि भवेयुः । तेषु च शमीपत्रमिश्राणि खर्जूरफलानि निक्षिप्य शूर्पे तानि स्थापयेत्। तदानीमेव तैरेव पिष्टैः मेषमध्वर्युः, मेषीं प्रतिप्रस्थाता च कुर्याताम् । मेषौ स्थाल्यां पचेयुः । ततः पूर्वोत्पादितायाम् उत्तरामिक्षायां मेषं दक्षिणामिक्षायां मेषीं चावधाय शमीपत्रकरीराणि प्रास्य तौ वेद्योर्निक्षिपेत् ॥

तत उभावपि अध्वर्युप्रतिप्रस्थातारौ पृथक् पृथगग्निं मथित्वा आहवनीययोः[1] प्रक्षिपतः। ततोऽध्वर्युः यजमानपत्नीं पृच्छति—'पत्नि! कति ते जाराः?' इति । यदि जाराः स्युः तदा सा तान्नाम्ना निर्दिशेत्। यदि निर्दिशेत् तदा सा व्यभिचारदोषान्मुक्ता भवेत्। यदि सतो न निर्दिशेत् तदा आत्मबन्धुभिः पतिपुत्रादिभिर्वियुक्ता भवेत्। ततः शूर्पं करम्भपात्रपूर्णमादय यजमानः पत्नी च दक्षिणविहारगतस्याग्नेः पूर्वदेशं गत्वा पश्चिमाभिमुखौ तिष्ठन्तौ शूर्पं शिरसि निधाय तथैव जुहुतः शूर्पेण जुहूस्थानीयेन। ततः शूर्पमन्यत्र त्यजेताम् । ततोऽध्वर्युराग्नेयादीनैन्द्राग्नपर्यन्तान् यागानवदानप्रेषणाश्रावणाद्यनुष्ठानपूर्वकं यथावदनुष्ठाय विरमेत्। ततः प्रतिप्रस्थाता मेषीसहितामिक्षायागम् अवदानाद्यनुष्ठाय दक्षिणेऽग्नौ कुर्यात् । अथैवमेवाध्वर्युरुत्तरस्मिन्नग्नौ मेषयुतामिक्षयागं कुर्यात्। ततोऽन्तिमं कदेवताकं यागमेककपालधर्मेणानुतिष्ठेत् । तत्र—अग्निः, सोमः, सविता, सरस्वती, पूषा, इन्द्राग्नी, मरुतः, वरुणः, क इति क्रमेण देवताः। ततः कायपुरोडाशमभितो मासनामभिश्चतुर्भिः नभ; नभस्यः, इषः, ऊर्ज इत्येवंरूपैः हुत्वा स्विष्टकृदिडाभक्षणानूयाजादिकं यथावदनुष्ठाय वाजिनेज्यामपि विधाय, अन्तेऽवभृथेष्टिं क्वचिज्जले कृत्वा तत्रैवावभृथस्नानं कुर्यात्। अत्रावभृथस्य सङ्कुचितं रूपम्, विस्तृतं सोमयाग एवेति तत्रैव स विशेषतो निरूप्यते । ततोऽवभृथादेत्य यजमानः प्रकृतीष्टिं कृत्वा वैश्वदेववत् वपनं कारयेत्। नियमांश्च धारयेत् ॥

॥ इति वरुणप्रघासाः ॥

---

१. दक्षिणभागस्थिताया वेद्या अग्रभागस्थ आहवनीयोऽग्निरत्राभिप्रेतः ।

## साकमेधपर्व

अथ तृतीयं साकमेधपर्व । दिनद्वयानुष्ठेयमिदम् । चत्वारि कर्माण्यत्र—अनीकवत्याद्य इष्टयः, महाहवींषि, पितृयज्ञः, त्र्यम्बकहवींषीति । तत्र कार्त्तिक्यां मार्गशीर्ष्यां वा चतुर्दश्यां शुक्लायां प्रातरग्निहोत्रं हुत्वा सङ्कल्प्य तदैव अनीकवतीष्टिः । अष्टाकपालः पुरोडाशो द्रव्यम् । अग्निरनीकवान् देवता । तत्र सूर्योदयात् पूर्वं कर्मारभ्य सूर्योदयकाल एव यथा हविर्निर्वापस्सम्भवेत् तथानुष्ठेयम् । ततो मध्यन्दिने सान्तपनीष्टिः । तत्र चरुर्द्रव्यम् । मरुतस्सान्तपना देवताः । तस्मिन्नेव दिने सायं गृहमेधीयेष्टिः । तत्र दुग्धपक्वश्चरुर्द्रव्यम् । स यजमानस्य यावत्यो गावः सन्ति सर्वास्ता दुग्ध्वा सर्वस्मिंस्तस्मिन् पयसि पक्वो गृहजनपर्याप्तौदनरूपो भवेत् । मरुतो गृहमेधिनो देवताः । न अत्र आघारप्रयाजानूयाजसामिधेनीप्रभृतीनामङ्गाना-मनुष्ठानम् । केवलमाज्यभागौ हविस्संपादननान्तरीयकाण्यवघातादीनि कर्माणि स्विष्टकृद्यागं चानुतिष्ठेत् । हुतावशिष्टमोदनं यजमानस्य गृहिणः सर्वे समेत्य भक्षयेयुः । भोजनमिदं चतुर्दश्यां रात्रौ भवति । ततो द्वितीयदिन उषसः प्रादुर्भावसमये उत्थाय स्नात्वा यजमानगृहस्थवृषभं तन्नाम सङ्कीर्त्य आह्वयेत् । तच्छ्रुत्वा तस्मिन् प्रतिशब्दायमाने सति पौर्णदर्व्याख्यं होममग्निहोत्रहोमात्पूर्वमनुष्ठाय क्रीडिनेष्टिं कुर्यात् । सा द्वितीयादिनसूर्योदयकालेऽनुष्ठेया । तत्र सप्तकपालः पुरोडाशो द्रव्यम् । मरुतः क्रीडिनो देवताः । मरुतः स्वतवसो वा । अन्यत्सर्वं यथावत् ॥

### महाहवींषि (साकमेधान्तर्गतानि)

ततो महाहवींषि । तत्राष्टौ यागाः । आग्नेयादिपञ्चकं वैश्वदेववत् । तत ऐन्द्राग्नः, ऐन्द्रः, वैश्वकर्मणश्चेति त्रयः । देवता आग्नेयादिषु पञ्चसु वैश्वदेववत् । तत इन्द्राग्नी, इन्द्रः, विश्वकर्मा च । द्रव्याणि स्पष्टानि । अत्रापि वरुणप्रघासवत् वेदिमध्ये प्राग्देशे उत्तरवेदिं कृत्वा गार्हपत्यादग्निं प्रणीय आहवनीयकरणम्, अग्निं मथित्वा आहवनीये प्रक्षेपश्च भवति । तत आघाराज्यभागप्रयाजानिष्ट्वा, अष्टानां प्रधानानामनुष्ठानं स्विष्टकृदि-

---

१. आपस्तम्बिनां बोधायनीयानामेव च गार्हपत्यात् प्रणयनमत्र विहितम् । अन्यशाखीयानां पशुबन्धवदाहवनीयादेव प्रणयनं विहितम् । एवमेव वरुणप्रघास-पर्वण्यपि उत्तरस्यां वेद्यामग्निप्रणयनं बोध्यम् ।

डाभक्षणानूयाजादिकरणं च वैश्वदेववदेव। वैश्वकर्मणस्यैककपालस्यानुष्ठानकाले मार्गशीर्षादिफाल्गुनान्तानि सहः, सहस्यः, तपः, तपस्य इत्येवंरूपाणि मासनामानि तमभिजुहुयात्। एतावता महाहविस्समाप्तिः॥

## महापितृयज्ञः

तदानीमेव महापितृयज्ञ आरब्धव्यः। अयं च पूर्वनिरूपितात् दर्शकालानुष्ठेयपिण्डपितृयज्ञात् भिन्नः। अयं साकमेधपर्वान्तर्गतः। अस्य वेदिरन्यप्रकारैव। साप्युपरिष्टान्निकृष्टा। तां निर्माय दक्षिणाग्नेरग्निं गृहीत्वा तं वेदिमध्ये स्थापयित्वा तत्रैव आहवनीयकर्तव्यानि सर्वकर्माणि कुर्यात् पितृयज्ञसंबन्धीनि। पितृयज्ञे च हविस्त्रयम्—षट्कपालः पुरोडाशः, धानाः (भ्रष्टयवाः), मृतवत्साया गोः पयसा मिश्रितानि भर्जितयवचूर्णानि चेति। सोमः पितृमान्, पितरो बर्हिषदः, पितरोऽग्निष्वात्ता इति क्रमेण देवताः। एतेषां हविषां निष्पादनार्थं यवान्निरुप्य, अवहत्य, फलीकृत्य, धानार्थान् मन्थार्थांश्च यवान् पृथग्विभज्य अवशिष्टान् पिष्ट्वा दक्षिणाग्निसमीपे षण्णां कपालानामुपरि पुरोडाशं श्रपयेत्॥

ततः पृथक्कृतान् यवान् भर्जयित्वा, अर्धं धानार्थम् अवशिष्य अर्धं पिष्ट्वा मन्थं कुर्यात्। मृतवत्साया गोः पयसि यवचूर्णानि प्रक्षिप्य इक्षुकाण्डेन मथित्वा मन्थं सम्पादयेत्। ततो वेद्यां सर्वाणि हवींष्यासाद्य तद्दक्षिणतः कशिपूपबर्हणाञ्जनाभ्यञ्जनोदकुम्भान्[1] पिण्डपितृयज्ञवदासाद्य चतुर्थप्रयाजवर्जं चतुरः प्रयाजानिष्ट्वा प्राचीनावीतिनः परिश्रितां वेदिं परिक्रम्य प्रधानहविर्भ्यः सकृत्सकृदवदाय तत्तद्देवतायै आश्रावणादिकमनुष्ठाय हविः त्यजेयुः। अत्र "आ स्वधा" इत्याश्रावणम्। "अस्तु स्वधा" इति प्रत्याश्रावणम्। "सोमं पितृमन्तं यज" इति प्रैषः। "ये यजामहे" इति स्थाने "ये स्वधामहे" इति "वौ३ षट्" इति स्थाने "स्व३ धा नमः" इति च पठेत्। अत्र द्वे द्वे पुरोऽनुवाक्ये, एकैका च याज्या भवन्ति। अग्निः कव्यवाहनः स्विष्टकृद्देवता। प्रधानयागेऽपि द्रव्याणां सकृत्सकृदेव अवदानम्। शेषभक्षणं केवलमवघ्राणरूपमेव। ततो यजमानः वेदिं त्रिः अप्रदक्षिणं परिषिच्य हविश्शेषेण पिण्डत्रयं कृत्वा, वेद्याः पूर्वपश्चिमदक्षिणकोणेषु पितृपितामहप्रपितामहेभ्यः तान् पिण्डान्

---

१. काशिप्वादयः पिण्डपितृयज्ञे व्याख्याताः। See Page २६, under पात्राणि।

निधाय, उत्तरस्मिन् वेदिकोणे हस्तलिप्तं निमृज्य, पितॄन्, गार्हपत्यं चोपस्थाय शय्योपबर्हणवस्त्राञ्जनादीनि पूर्वोपकल्पितानि पितृभ्यो यथावत् दत्त्वा प्राचीनावीतानि विस्रस्य यज्ञोपवीतानि कृत्वा पूर्ववैपरीत्येन वेदिं परिक्रम्य परिश्रयणमपास्य प्रथमवर्जितावनूयाजौ द्वाविष्ट्वा निवीतं कृत्वा सूक्तवाकादि सर्वं समापयेयुः समिष्टयजुःपत्नीसंयाजवर्जम्। एतावता पितृयज्ञसमाप्तिः ॥

## त्र्यम्बकहवींषि

अथ त्र्यम्बकहवींषि। तत्र यजमानगृहावस्थितस्त्रीपुरुषसङ्ख्यापेक्षया एकाधिकसङ्ख्याकान् एककपालान् पुरोडाशान् तूष्णीमेव श्रपयित्वा तान् मूते कृत्वा दक्षिणाग्नेरेकमङ्गारमादाय मूतगतैः पुरोडाशैः उल्मुकेन (अङ्गारेण) सह ईशानदिशं गत्वा तत्रैकं पुरोडाशं मूषिकोत्खातपांसुषु प्रक्षिप्य ततः चतुष्पथं गत्वा तत्र तमङ्गारं निधाय संवर्ध्य सर्वेभ्यः पुरोडाशेभ्यः सकृत्सकृदवदाय रुद्राय हुत्वा तमग्निं त्रिः परिक्रम्य हुतावशिष्टान् पुरोडाशानूर्ध्वमाकाशे उत्क्षिप्य पततस्तान् गृहीत्वा यजमानहस्ते दत्त्वा तान् पुनर्मूते निक्षिप्य बद्ध्वा शुष्के कस्यचिद्वृक्षस्य स्थाणावाबध्नीयात्। क्वचिद्वल्मीकच्छिद्रे वा निधानम्। ततः परितो मूतमवस्राव्य प्रत्यावृत्त्यानवेक्षमाणा गृहमागच्छेयुः। आगत्य च अदितिदेवताकं यागं घृतश्रपितचरुणा कुर्यात् ॥

॥ समाप्तं साकमेधपर्व ॥

## शुनासीरीयपर्व

ततः शुनासीरीयं पर्व। साकमेधसमाप्त्यनन्तरं द्वयोः त्रिषु चतुर्षु वा दिनेषु मासे वाप्यतीते शुनासीरीयानुष्ठानं कर्तव्यम्। चतुर्षु वा मासेष्वतीतेषु फाल्गुन्यामेव कुर्यात्। तत्र आग्नेयादयः पञ्च वैश्वदेववद्यागाः। तत ऐन्द्राग्नः, वैश्वदेवः, शुनासीरीयः, वायव्यः, सौर्यश्चेत्यधिकाः पञ्च। तेषु इन्द्राग्नी, विश्वे देवाः, इन्द्रः शुनासीरः, वायुः, सूर्यश्च देवताः। द्रव्याणि पुरोडाशः, चरुः, पयश्च। चर्वाद्यर्थं पूर्ववदेव निर्वापप्रोक्षणावघातपेषणश्रपणादयः। पयसः कृते वत्सापाकरणदोहनादिकं प्रातर्दोहवदेव। नव प्रयाजाः नव चानूयाजाः। अन्यत्सर्वं पर्वान्तरवदेव। परं

## सौम्यचरुः

ततः सौम्यचरुयागः । अनवस्रावितः तण्डुलपक्व ओदनः "चरुः" इत्युच्यते । तं यागमिष्टिकल्पेनानुष्ठाय तत उपांशुपात्रेण प्रातस्सवनोपयुक्तेन पात्नीवताख्यं ग्रहम् आग्रयणस्थालीतो गृहीत्वा अनासाद्यैव आश्रावणाद्यनन्तरं जुहुयात् । अत्र अग्निः पत्नीवान् देवता । ततस्तदीयभक्षणे निर्वर्तिते आधवनीयपात्रस्थं सर्वं सोमरसं पूतभृत्युत्पूय ततस्सर्वांश्चमसांश्चमसाध्वर्यु-भिरुन्नाय्य यज्ञायज्ञियाख्यमग्निष्टोमस्तोत्रमन्तिमम् उद्गातृभिः प्रारम्भयेत् । स्तोत्रमिदमेकविंशस्तोमकम् । स्तोत्रस्तवनकाले सर्वे तत्सम्बन्धिनः स्वं शिरोऽवकुण्ठयेयुः । स्तोत्रे समाप्ते होता आग्निमारुताख्यमन्तिमं शस्त्रं शंसेत् । अध्वर्युः प्रतिगिरेत् । शस्त्रस्यान्तिमायामृचि शस्यमानायां प्रतिप्रस्थाता प्रातस्सवने चरमगृहीतं ध्रुवग्रहं होतृचमसेऽवनयेत् । ततो होतृचमसमध्वर्युः अन्यांश्चमसांश्चमसाध्वर्यवश्च आदाय यथावज्जुहुयुः । अत्र अग्निर्वैश्वानरो मरुतश्च देवताः । ततस्तेषां भक्षणम् । तदनन्तरमव-शिष्टपाशुककर्मणामनुष्ठानं परिधिप्रहरणान्तम् । अत्र अध्वर्युर्विरमेत् ॥

## हारियोजनग्रहप्रचारः

ततः उन्नेता आग्रयणपात्रस्थं सर्वं सोमरसं द्रोणकलशेन गृहीत्वा सादनमकृत्वैव यवधानाभिस्संमिश्र्य पात्रं शिरसि निक्षिप्य आश्रावणादौ कृते शिरस्त एव जुहुयात् । ततः सर्वे ऋत्विजो हारियोजनं भक्षयेयुः । ततश्चमसिनः स्वं स्वं चमसमवजिघ्रेयुः । तदेवात्र भक्षणम्, न तु पूर्ववत् प्रत्यक्षभक्षणम् । ततश्चमसिनामाग्नीध्रीये *दधिद्रप्सभक्षणम् । ततः ऋत्विजः पूर्वप्रतिज्ञातं परस्परसख्यं विसृजेयुः । ततः पत्नीसंयाजसमिष्ट-यजुर्होमादिकं सवनीयहविरङ्गकलापं परिसमाप्य प्रायश्चित्तहोमान् हुत्वा सवनसमाप्तिहोमं कुर्यात् । ततो यजमानस्य विष्णुक्रमणादि ॥

॥ एतावता तृतीयसवनं समाप्तम् ॥

---

* दधिद्रप्सो दध्नोऽत्यल्पोऽशः । दधि च लौकिकमापणादितो ग्राह्यम् ।

---

१. आप. श्रौ. १३. १३. १४—२२.

२. आप. श्रौ. १३. १७. १—९. १८. १—५. बौ. ८. १६.

## अथ अवभृथेष्टिः[1]

ततः सोमयागोपयुक्तानि सर्वाणि पात्राण्यादाय (ऐष्टिकपात्राणि विहाय) औदुम्बर्यां [क]राजासन्द्यां निक्षिप्य तामादाय ऋजीषं च गृहीत्वा सपत्नीको यजमानस्सर्वे च ऋत्विजो यत्रावभृथेष्टिं करिष्यन्ति तज्जलसमीपं गच्छेयुः। तत्रेष्टिद्रव्यम् एककपालपुरोडाशं यज्ञशालाग्रावेव सज्जीकृत्य गृहीत्वा गच्छेयुः। गमनात्पूर्वं तदङ्गतया आहवनीये कांश्चन होमान् हुत्वा मध्येमार्गं गमनमन्त्रं जपन्तः साम गायन्तः अवभृथार्हं जलं प्राप्नुयुः। तत्र जल एव अवभृथेष्टिं कुर्युः। तत्र अग्नीवरुणौ आज्यभागदेवते। बर्हिःप्रयाजवर्जिताः चत्वारः प्रयाजाः। एवं द्वावनूयाजौ। वरुणः पुरोडाशदेवता। सर्वे होमा जल एव॥

तत [ख]ऋजीषं प्रोक्ष्य तत् जले प्रक्षिप्य प्रचरण्या निमज्ज्य सोमलिप्तानि[ग] सर्वाणि पात्राणि जले प्रक्षिप्य दीक्षाकाले धृतानि योक्त्रमेखलावस्त्रजालकृष्णाजिनानि जले प्रविध्य तत्रैव जले यजमानः पत्नी च स्नायाताम्। तदा परस्परं पृष्ठशोधनं कुरुताम्। तदा सर्वेऽप्यृत्विजः सहैव स्नायुः। तदा अवभृथस्नानार्थमागतानां सर्वेषां शिरसि यजमानोऽञ्जलिना जलमुत्क्षिपेत्। ततस्ते [घ]स्नानं कुर्युः इति सम्प्रदायः॥

तत उन्नेत्रा यजमानादिषु जलादुत्तारितेषु नूतनमहतं वासः परिदधीयातां यजमानः पत्नी च। ततो यजमान आदित्यमुपस्थाय

क. यागार्थं क्रीतस्सोमो यागात् पूर्वं यत्र स्थापित आसीत्, सा राजासन्दी. See. Page 62

ख. निष्पीड्य गृहीतरसं निस्सारं सोममित्यर्थः।

ग. अभिषवग्रहणहोमादिकाले येषु येषु पात्रेषु सोमरसलेपोऽभवत्, तानि सर्वाणि पात्राणि।

घ. अवभृथस्नानमिदम् अतीव पुण्यप्रदं सर्वेषां व्याध्यादिनिवर्तकं चेति शिष्टाः।

१. See. आप. श्रौ. १३. १९. १—१०, २०. २१. कात्या. श्रौ. १०. ८. १७—१०-९-४.

पुनर्देवयजनमागत्य शालामुखीयेऽग्नावेव उदयनीयेष्टिमनुतिष्ठेत् । सा प्रायणीयेष्टिवदेव । परं प्रायणीयेष्ट्यां या याज्याः ता उदयनीयायां पुरोऽनुवाक्याः । याश्च तत्र पुरोऽनुवाक्यास्ता अत्र याज्याः । देवतास्तु ता एव । द्रव्याण्यपि तान्येव । किं च प्रायणीयार्थं यस्मिन् पात्रे चरुः पक्वः तदप्रक्षाल्यैव पूर्वं स्थापितम् । तत्रैवोदयनीयार्थं चरुं पचेत् । इत्येतावान् विशेषः । तत आनुबन्ध्यपशुयागः । तत्र गौर्वन्ध्या पशुत्वेन विहिता । परं कलौ गोवधो निषिद्ध इति कृत्वा तद्विकल्पतया बह्वृचब्राह्मणे विहित आमिक्षायाग एवेदानीमनुष्ठीयते । स इष्टिरूप इति कृत्वा दर्शान्तर्गतैन्द्रयागवदनुष्ठेयः । मित्रावरुणौ देवता । आमिक्षासम्पादनप्रकारः चातुर्मास्येषु प्रथमे पर्वण्युक्तः । [क]तामिडान्तां समग्रां वा परिसमाप्य यजमानो वेदेर्दक्षिणभागे केशश्मश्रुनखलोमानि वापयित्वा स्नात्वा देविकासंज्ञकाः—धाता, अनुमतिः, राका, सिनीवाली, कुहूः इति पञ्च देवताः इष्टिकल्पेनाज्येनेष्ट्वा, प्रथमगार्हपत्यमरण्योस्समारोप्य, गृहमागत्य, अरणी मथित्वा, अग्नीन् विहृत्य तत्रोदवसानीयाख्यामिष्टिम् अष्टाकपालपुरोडाशद्रव्यकाम्, तत्स्थाने विष्णुदेवताकामेकामाहुतिं वा कृत्वा अनन्तरं रात्रावप्यग्निहोत्रमारभ्य सायमग्निहोत्रं कुर्यात् । उदिते प्रातरग्निहोत्रमनुतिष्ठेत् । आगामिन्यां पूर्णिमायां दर्शपूर्णमासावारभेत यदि सोमपूर्वाधानी स्यात् । एवं समाप्तस्सोमयागोऽग्निष्टोमसंस्थः प्रथमः ॥

## उक्थ्यसंस्था द्वितीया

उक्थ्यसंस्थाको यदि स्यात् क्रतुः, तत्र प्रातस्सवनमाध्यन्दिनसवनयोर्न विशेषोऽस्ति कश्चन । आदौ सङ्कल्पे सवनीयपशौ परं कियांश्चन विशेषः । 'उक्थ्येन यक्ष्ये' इति सङ्कल्पः । सवनीयपशुर्द्वितीयः ऐन्द्राग्न आग्नेयेन सह । सोमक्रयणकालेऽधिकस्सोम उन्मातव्यः । विशेषेणानेन सह प्रकृतिवन्माध्यन्दिनसवनान्तं यावदनुष्ठाय तृतीयसवनारम्भे चमसगणत्रयपर्याप्तम् ऋजीषमभिषुत्य सोमरसं सम्पादयेत् । तत्र प्रकृतिवद्धारां स्रावयित्वा[१] तृतीयसवनीयाग्रयणहोमोत्तरकालं धाराया एव त्रीनुक्थ्यग्रहान्

क. समग्रानुष्ठानपक्षे वाजिनयागोऽपि वैश्वदेवपर्ववत्कर्तव्यः । इडान्तपक्षे न ।

१. तै. सं. ६. १. ५. ६. शत. ब्रा. ४. ४. २.

गृहीत्वा आयतने सादयेत् । ततोऽग्निष्टोमसंस्थावदेव क्रमेण कर्माण्यनुतिष्ठन्, अग्निष्टोमस्तोत्रसम्बन्धिचमसगणप्रचारानन्तरम् उक्थ्यग्रहप्रचारं कुर्यात् ॥

तत्रादौ चमसोन्नयनार्थं चमसाध्वर्यून् प्रेष्य, तेषु चमसानापूर्यागतेषु, अध्वर्युः उक्थ्यस्तोत्रार्थम् उद्गातॄन् प्रेष्य तैर्यथावत्स्तुत्वा स्तोत्रे परिसमापिते मैत्रावरुणं शस्त्रशंसनार्थमभ्यर्थ्य, स्वयं च प्रतिगीर्य, तेन शस्त्रे समापिते चमसहस्तैश्चमसाध्वर्युभिस्सह प्रथममुक्थ्यग्रहमादाय आहवनीयं गत्वा आश्रावणादिपूर्वकं हुत्वा भक्षयेत् । ततो द्वितीयतृतीयावपि उक्थ्यग्रहावेवमेव चमसैस्सह प्रचरेत् । तत्र त्रिष्वपि पर्यायेषु स्तोतार उद्गातारस्त एव । शस्त्रेषु परं प्रथमे पर्याये मैत्रावरुणः, द्वितीये ब्राह्मणाच्छंसी, तृतीयेऽच्छावाकश्च शंसितारो भवेयुः । प्रथमे उक्थ्यग्रहे इन्द्रावरुणौ, द्वितीये इन्द्राबृहस्पती, तृतीये इन्द्राविष्णू च देवताः । एवं चोक्थ्यक्रतोः त्रीण्युक्थ्यस्तोत्राणि त्रीणि च शस्त्राण्यधिकानि । तानि चान्ते योजनीयानीत्येतावान् विशेषः । अन्यत्सर्वं प्रकृतिवत् ॥

## षोडशिसंस्था तृतीया

यदि स्यात् षोडशिसंस्थाकः क्रतुः तदा प्रातस्सवने सर्वधाराग्रहाणामन्ते चतुरश्रे ऊर्ध्वपात्रे षोडश्याख्यं ग्रहं गृहीत्वा खरे आसादयेत् । पशुरत्र मेषस्तृतीय ऐन्द्रः पूर्वाभ्यामाग्नेयैन्द्राग्नाभ्यां सह । तृतीयसवने उक्थ्यग्रहचमसप्रचारानन्तरं षोडश्यर्थं चमसानुन्नीय सूर्यस्यार्धास्तसमये षोडशिस्तोत्रमारम्भयेदध्वर्युः । स्तोत्रे समाप्ते शस्त्रम् । ततस्तद्ग्रहचमसप्रचारः । अवशिष्टानि कार्याणि प्रकृतिवत् । उक्थ्यपर्यन्तं पञ्चदश स्तोत्राणि शस्त्राणि चेत्युक्तम् । अत्राधिकमेकं शस्त्रं स्तोत्रं च वर्धते । तच्च षोडशम् । तत्सम्बन्धाद्ग्रहः षोडशी । तत्सम्बन्धाच्च क्रतुरपि षोडशीति व्यवह्रियते । श्रुतावेवमेव निर्वचनमुक्तम् ॥

## अतिरात्रसंस्था चतुर्थी

अतिरात्रसंस्थाके क्रतौ सोमक्रयकाले बहुलं सोमं क्रीत्वा मित्वा च स्थापयेत् । पूर्वोक्तैः (षोडशिन्युक्तैः) पशुभिस्त्रिभिस्सह मेषी चतुर्थी सरस्वतीदेवताका । तृतीयसवनीयाभिषवकाल एव तत्पर्याप्तमृजीषमभिषुत्य

१. See. तै. सं. ६. ६. ११. ६  २. तै. सं. ६. ६. ११. १.

पूतभृति रसमापूर्य स्थापयेत् । षोडशिग्रहप्रचारानन्तरं होतृचमसमुख्यान् दशापि चमसान् उन्नीय प्रथमे रात्रिस्तोत्रपर्याये प्रथमं स्तोत्रं स्तावयेत् । समाप्ते तस्मिन् होता प्रथमपर्याये प्रथमं शस्त्रं पठेत् । तत्समाप्तावध्वर्युः होतृचमसं चमसाध्वर्यवश्च अन्यांश्चमसानादाय आहवनीये हुत्वा भक्षक्रमेण भक्षयेयुः । अत्र वषट्कर्ता होता ॥

ततो मैत्रावरुणचमसं प्रथमं कृत्वा चमसानुन्नाय्य द्वितीये स्तोत्रे स्तुते, मैत्रावरुणेन शस्त्रे शस्तेऽध्वर्य्वादयः पूर्ववद्धुत्वा भक्षयेयुः । तदिदं गणद्वयमध्वर्युः कुर्यात् । अनन्तरं गणद्वयं प्रतिप्रस्थातृकर्तृकम् । अध्वर्युणा यत्कर्तव्यं तत्प्रतिप्रस्थाता कुर्यात् । अत्र ब्राह्मणाच्छंसिचमसं मुख्यं कृत्वा प्रचारः । यस्य चमसो मुख्यो भवति स एव तत्र वषट्कर्ता । अयं प्रथमः पर्यायः । एवमेव पर्यायद्वयं पुनरावर्तयेयुः । एवमेकस्मिन् पर्याये चत्वारि स्तोत्राणि तावन्ति शस्त्राणि चेति त्रिष्वपि पर्यायेषु मिलित्वा द्वादश स्तोत्राणि शस्त्राणि च भवन्ति। इम एव त्रयो रात्रिपर्याया इत्युच्यन्ते । रात्रावेव स्तूयमानत्वादेषां रात्रिस्तोत्राणीति संज्ञा । तेषां पर्यायो रात्रिपर्याय इति । षोडशिग्रहानन्तरं ग्रहो नास्ति, किं तु चमसा एव । अत्र सर्वेषां चमसगणानामिन्द्र एव देवता ॥

एवं पर्यायेषु समाप्तेषु प्रतिप्रस्थाता अश्विदेवताकं द्विकपालं पुरोडाशं व्रीह्यानयनप्रोक्षणावहननपेषणादिपूर्वकं श्रपयित्वा वेद्यामासादयेत् । ततोऽध्वर्युर्होतृचमसमुख्यांश्चमसानुन्नीय सन्धिस्तोत्रमारम्भयेत् । समाप्ते तस्मिन् होता आश्विनशस्त्रं प्रारभेत । तत्सूर्योदयानन्तरमेव समापयीत । ततः पूर्वं शस्त्रसमाप्तौ याः काश्चिदृचः शंसन्नेव सूर्योदयं प्रतीक्षेत । उदित एव सूर्ये शस्त्रस्यान्तिमामृचं पठेत् । उदयानन्तरं समाप्ते शस्त्रे, अध्वर्युर्होतृचमसं चमसाध्वर्यवश्चान्यांश्चमसान् गृहीत्वा आश्रावणाद्यनन्तरं जुहुयुः । अस्मिन्नेव समये प्रतिप्रस्थाता पूर्वसंपादितमाश्विनपुरोडाशं जुहुयात् । अत्र सर्वेषां चमसानां पुरोडाशस्य च अश्विनौ देवता । समग्रस्यैव पुरोडाशस्य होमो न अवदानादि कृत्वेति विशेषः । ततश्चमसभक्षणम् । अत्र होता वषट्कर्ता । अवशिष्टं प्रकृतिवत्समाप्य अवभृथं कुर्यात् । सर्वत्र अवभृथानन्तरम् उदयनीयेष्टिः, अनूबन्ध्यास्थाने मैत्रावरुण्यामिक्षा, उदवसानीया च प्रकृतिवदेवेति ॥

एवं चतसृणां सोमसंस्थानां स्वरूपम् । तत्र संक्षेपेण निरूपितम् । एताभ्य एव चतसृभ्यस्सोमसंस्थाभ्यो ग्रहचमसस्तोत्राणामावापोद्वापादिना अन्यास्तिस्रस्संस्थाः प्रसूताः । ताश्च अत्यग्निष्टोम-वाजपेय-अप्तोर्यामनाम्ना व्यवहारं भजन्ते ॥

## अत्यग्निष्टोमसंस्था पञ्चमी

तत्र, अग्निष्टोमस्तोत्रानन्तरम् उक्थ्यस्तोत्राणि त्रीण्यकृत्वा षोडशिस्तोत्रशस्त्रादिप्रचारो यत्र क्रियते सा अत्यग्निष्टोमसंस्थेत्युच्यते । एवं च अग्निष्टोम एव तदुत्तरं षोडशिग्रहचमसस्तोत्रादीनामनुष्ठाने सा अग्निष्टोमसंस्थैव संस्थान्तरं भजत इति फलितम् । अत्यग्निष्टोमसंस्थायामस्यां क्षत्रिय एवाधिकारी न ब्राह्मणवैश्याविति केचित् ब्रुवते । परमाश्वलायनादिभिः त्रैवर्णिककर्तृकसंस्थामध्येऽस्या अपि पाठात् तयोरप्यत्राधिकारं मन्वाना याज्ञिकास्तथैवानुतिष्ठन्ति ॥

## वाजपेयसंस्था षष्ठी

वाजपेयसंस्थायां प्रातर्माध्यन्दिनसवने अग्निष्टोमवदेव । तृतीयसवनेऽपि षोडशिग्रहस्तोत्रान्तं षोडशिवदेव । तदनन्तरं वाजपेयसंज्ञकमेकं स्तोत्रम् । एकश्चमसगणो होतृचमसमुख्यः । स्तोत्रं च सप्तदशस्तोमकम् । शस्त्रं होतुरेव । अयं संस्थान्तर्गतः संस्थास्वेव गण्यते । अतस्संस्थावाजपेय इत्यपि व्यवहारोऽस्य । नायमापस्तम्बबोधायनादिभिर्विहितः न वा याजुषीषु शाखासु विधानमस्य दृश्यते । ताण्ड्यब्राह्मणे छन्दोगसूत्रे च अयमेव विहित इति कृत्वा केचिद्याज्ञिका अनुतिष्ठन्ति । तैत्तिरीयाद्युक्तो वाजपेय इतो भिन्नः । तत्र सप्तदश दीक्षाः, तिस्र उपसदः एका सुत्या । सप्तदश प्राजापत्याः सवनीयपशवः । सप्तदशारत्निर्यूपः । तं सप्तदशभिर्वासोभिर्वेष्टयेत् । सप्तदश सोमग्रहाः प्रजापतिदेवताकाः । तथा सुराग्रहा अपि सप्तदश । इदानीं याज्ञिकाः सुराग्रहस्थाने पयोग्रहाननुतिष्ठन्ति । सुत्यादिने सर्वे ऋत्विजो हिरण्यमाला धारयेयुः । ऋत्विग्भ्यः सप्तदश सप्तदश रथाश्वगजशकटदासीदासनिष्कगोऽजाविदुन्दुभीनां दक्षिणात्वेन दद्युः । सवनीयपशुकाले प्राजापत्यैस्सह क्रतुपशूनपि पञ्चोपाकृत्य पर्यग्निकरणान्तं कृत्वा प्रथमतश्चतुरः क्रतुपशूनुपाकृत्य वपान्तं कृत्वा विरम्य ब्रह्मसामकालेऽवशिष्टैः पशुभिः प्रचरेत् । ततः सप्तदशशरावपरिमित-

मैत्रावरुणं निरूप्य तेन प्रचरेत् । सर्वमन्यत्प्रकृतिवत् । एष आप्तो वाजपेयः । इतोऽप्यन्यः कुरुवाजपेयः कश्चिदस्ति । तस्याङ्गेषु बह्वस्ति वैलक्षण्यम् । तत्सूत्रादितोऽवगन्तव्यम् ॥

॥ इति वाजपेयः ॥

## अप्तोर्यामसंस्था सप्तमी

अतिरात्रसंस्थावत् रात्रिस्तोत्राणि सन्धिस्तोत्रं च यथावदनुष्ठाय तदनन्तरं चत्वारि स्तोत्राणि अधिकतया यत्रानुष्ठीयते सा अप्तोर्यामसंस्था । अप्तोर्यामशब्दव्युत्पत्तिः श्रुतावेवं वर्णिता—पुरा कदाचित् प्रजापतिः पशूनसृजत् । सृष्टास्ते ततोऽपगताः ।ताननेन क्रतुना आप्नोत् । यस्मादाप्नोत् तस्मादप्तोर्यामत्वमिति । अप्तोः प्राप्तिः यामो यज्ञः अप्तोर्याम इति । एवं च सन्धिस्तोत्रान्तम् एकोनत्रिंशतं स्तोत्राण्यनुष्ठाय तदनन्तरं चत्वारि स्तोत्राणि तदर्थं चत्वारश्चमसगणा अप्यनुप्रेयाः । तेष्वतिरात्रवदेव प्रथमद्वितीयगणयोरध्वर्युः तृतीयचतुर्थयोः प्रतिप्रस्थाता च कर्तारौ । इयमप्तोर्यामसंस्थेत्युच्यते ॥

एवं सप्तानां सोमसंस्थानां स्वरूपाणि संक्षिप्तानि । विस्तरस्तु ब्राह्मणेभ्योऽवगन्तव्यः श्रौतसूत्रादिभ्यश्च । अत्र सप्तस्वपि संस्थासु स्तोत्रशस्त्रादीनां स्तोमसङ्ख्याविशेषादीनां सम्प्रतिपत्तये तानि नीचैः प्रदर्श्यन्ते । तत्तद्गसाध्यस्तुतिगतसङ्ख्याविशेषः त्रिवृत्पञ्चदशादिः स्तोमशब्दव्यवहारभाक् । अग्निष्टोमादिष्वनुष्ठेयानां स्तोत्राणां शस्त्राणां च स्तोमसङ्ख्यादिकं सुखावबोधाय पङ्क्तिरूपेण प्रदर्श्यते—

१. अग्निष्टोमे—

प्रातःसवने

| सङ्ख्या | स्तोत्रनाम | स्तोमः | शस्त्रनाम | शस्त्रकर्ता |
|---|---|---|---|---|
| १ | बहिष्पवमानस्तोत्रम् | त्रिवृत् | १ आज्यशस्त्रम् | होता |
| २ | आज्यस्तोत्रम् | पञ्चदश | २ प्रउगशस्त्रम् | होता |
| ३ | ,, | ,, | ३ मैत्रावरुणशस्त्रम् | मैत्रावरुणः |
| ४ | ,, | ,, | ४ ब्राह्मणाच्छंसिशस्त्रम् | ब्राह्मणाच्छंसी |
| ५ | ,, | ,, | ५ अच्छावाकशस्त्रम्, | अच्छावाकः |

माध्यन्दिनसवने

| सङ्ख्या | स्तोत्रनाम | स्तोमः | | शस्त्रनाम | शस्त्रकर्ता |
|---|---|---|---|---|---|
| ६ | माध्यन्दिनपवमानम् | पञ्चदश | ६ | मरुत्वतीयशस्त्रम् | होता |
| ७ | पृष्ठस्तोत्रम् | सप्तदश | ७ | निष्केवल्यशस्त्रम् | होता |
| ८ | ,, | ,, | ८ | मैत्रावरुणशस्त्रम् | मैत्रावरुणः |
| ९ | ,, | ,, | ९ | ब्राह्मणाच्छंसिशस्त्रम् | ब्राह्मणाच्छंसी |
| १० | ,, | ,, | १० | अच्छावाकशस्त्रम् | अच्छावाकः |

तृतीयसवने

| | | | | | |
|---|---|---|---|---|---|
| ११ | आर्भवपवमानस्तोत्रम् | सप्तदश | ११ | वैश्वदेवशस्त्रम् | होता |
| १२ | अग्निष्टोमस्तोत्रम् | एकविंशतिः | १२ | आग्निमारुतशस्त्रम् | होता |

आहत्य अग्निष्टोमे द्वादश स्तोत्राणि, द्वादश शस्त्राणि, चत्वारः स्तोमाः। सर्वत्र स्तोत्रेषु प्रस्तोता उद्गाता प्रतिहर्ता च स्तोतारः। शस्त्रेषु परं कर्तृभेदः॥

२. उक्थ्ये—

५ प्रातस्सवने—अग्निष्टोमवदेव स्तोत्राणि शस्त्राणि स्तोमाश्च।
५ माध्यन्दिनसवने—अग्निष्टोमवदेव स्तोत्राणि शस्त्राणि स्तोमाश्च।
१०

तृतीयसवने

| | | | | | |
|---|---|---|---|---|---|
| ११ | आर्भवपवमानस्तोत्रम् | सप्तदश | ११ | वैश्वदेवशस्त्रम् | होता |
| १२ | अग्निष्टोमस्तोत्रम् | एकविंशतिः | १२ | आग्निमारुतशस्त्रम् | होता |
| १३ | उक्थ्यस्तोत्रम् | ,, | १३ | मैत्रावरुणशस्त्रम् | मैत्रावरुणः |
| १४ | ,, | ,, | १४ | ब्राह्मणाच्छंसिशस्त्रम् | ब्राह्मणाच्छंसी |
| १५ | ,, | ,, | १५ | अच्छावाकशस्त्रम् | अच्छावाकः |

आहत्योक्थ्यक्रतौ पञ्चदश स्तोत्राणि शस्त्राणि च। स्तोमाश्चत्वारः।

## ३. षोडशिक्रतौ—

५ प्रातस्सवने—अग्निष्टोमवदेव स्तोत्राणि शस्त्राणि स्तोमाश्च ।
५ माध्यन्दिनसवने—अग्निष्टोमवदेव स्तोत्राणि शस्त्राणि स्तोमाश्च ।
——
१०

### तृतीयसवने

| सङ्ख्या | स्तोत्रनाम | स्तोमः | | शस्त्रनाम | शस्त्रकर्ता |
|---|---|---|---|---|---|
| ११ | आर्भवपवमानस्तोत्रम् | सप्तदश | ११ | वैश्वदेवशस्त्रम् | होता |
| १२ | अग्निष्टोमस्तोत्रम् | एकविंशः | १२ | आग्निमारुतशस्त्रम् | होता |
| १३ | उक्थ्यस्तोत्रम् | ,, | १३ | मैत्रावरुणशस्त्रम् | मैत्रावरुणः |
| १४ | ,, | ,, | १४ | ब्राह्मणाच्छंसिशस्त्रम् | ब्राह्मणाच्छंसी |
| १५ | ,, | ,, | १५ | अच्छावाकशस्त्रम् | अच्छावाकः |
| १६ | षोडशिस्तोत्रम् | ,, | १६ | षोडशिशस्त्रम् | होता |

आहत्य षोडशिक्रतौ षोडश स्तोत्राणि षोडश शस्त्राणि चत्वारश्च स्तोमाः ।

## ४. अतिरात्रे—

५ प्रातस्सवने—अग्निष्टोमवदेव स्तोत्राणि शस्त्राणि स्तोमाश्च ।
५ माध्यन्दिनसवने—आग्निष्टोमवदेव स्तोत्राणि शस्त्राणि स्तोमाश्च !
——
१०

### तृतीयसवने

| | | | | | |
|---|---|---|---|---|---|
| ११ | आर्भवपवमानस्तोत्रम् | सप्तदश | ११ | वैश्वदेवशस्त्रम् | होता |
| १२ | अग्निष्टोमस्तोत्रम् | एकविंशः | १२ | आग्निमारुतशस्त्रम् | होता |
| १३ | उक्थ्यस्तोत्रम् | ,, | १३ | मैत्रावरुणशस्त्रम् | मैत्रावरुणः |
| १४ | ,, | ,, | १४ | ब्राह्मणाच्छंसिशस्त्रम् | ब्राह्मणाच्छंसी |
| १५ | ,, | ,, | १५ | अच्छावाकशस्त्रम् | अच्छावाकः |
| १६ | षोडशिस्तोत्रम् | ,, | १६ | षोडशिशस्त्रम् | होता |

प्रथमे रात्रिपर्याये

| सङ्ख्या | स्तोत्रनाम | स्तोमसं० | | शस्त्रनाम | शस्त्रकर्ता |
|---|---|---|---|---|---|
| १७ | प्रथमं रात्रिस्तोत्रम् | पञ्चदश | १७ | प्रथमं रात्रिशस्त्रम् | होता |
| १८ | द्वितीयं रात्रिस्तोत्रम् | ,, | १८ | द्वितीयं रात्रिशस्त्रम् | मैत्रावरुणः |
| १९ | तृतीयं रात्रिस्तोत्रम् | ,, | १९ | तृतीयं रात्रिशस्त्रम् | ब्राह्मणाच्छंसी |
| २० | चतुर्थं रात्रिस्तोत्रम् | ,, | २० | चतुर्थं रात्रिशस्त्रम् | अच्छावाकः |

द्वितीये पर्याये

| | | | | | |
|---|---|---|---|---|---|
| २१ | प्रथमं रात्रिस्तोत्रम् | पञ्चदश | २१ | प्रथमं रात्रिशस्त्रम् | होता |
| २२ | द्वितीयं रात्रिस्तोत्रम् | ,, | २२ | द्वितीयं रात्रिशस्त्रम् | मैत्रावरुणः |
| २३ | तृतीयं रात्रिस्तोत्रम् | ,, | २३ | तृतीयं रात्रिशस्त्रम् | ब्राह्मणाच्छंसी |
| २४ | चतुर्थं रात्रिस्तोत्रम् | ,, | २४ | चतुर्थं रात्रिशस्त्रम् | अच्छावाकः |

तृतीये पर्याये

| | | | | | |
|---|---|---|---|---|---|
| २५ | प्रथमं रात्रिस्तोत्रम् | पञ्चदश | २५ | प्रथमं रात्रिशस्त्रम् | होता |
| २६ | द्वितीयं रात्रिस्तोत्रम् | ,, | २६ | द्वितीयं रात्रिशस्त्रम् | मैत्रावरुणः |
| २७ | तृतीयं रात्रिस्तोत्रम् | ,, | २७ | तृतीयं रात्रिशस्त्रम् | ब्राह्मणाच्छंसी |
| २८ | चतुर्थं रात्रिस्तोत्रम् | ,, | २८ | चतुर्थं रात्रिशस्त्रम् | अच्छावाकः |
| २९ | सन्धिस्तोत्रम् | त्रिवृत् | २९ | आश्विनशस्त्रम् | होता |

आहत्य अतिरात्रे ऊनत्रिंशत्स्तोत्राणि तावन्त्येव च शस्त्राणि चत्वारः स्तोमाः ।

## ५ अप्तोर्यामक्रतौ—

प्रातस्सवने

| | | | | | |
|---|---|---|---|---|---|
| १ | बहिष्पवमानस्तोत्रम् | त्रिवृत् | १ | आज्यशस्त्रम् | होता |
| २ | आज्यस्तोत्रम् | पञ्चदश | २ | प्रउगशस्त्रम् | होता |
| ३ | ,, | ,, | ३ | मैत्रावरुणशस्त्रम् | मैत्रावरुणः |
| ४ | ,, | ,, | ४ | ब्राह्मणाच्छंसिशस्त्रम् | ब्राह्मणाच्छंसी |
| ५ | ,, | ,, | ५ | अच्छावाकशस्त्रम् | अच्छावाकः |

## माध्यन्दिनसवने

| सङ्ख्या | स्तोत्रनाम | स्तोमसं० | शस्त्रनाम | शस्त्रकर्ता |
|---|---|---|---|---|
| ६ | माध्यन्दिनपवमानस्तोत्रम्— | सप्तदश | ६ मरुत्वतीयशस्त्रम् | होता |
| ७ | होतुः पृष्ठस्तोत्रम् | एकविंशः | ७ निष्केवल्यशस्त्रम् | होता |
| ८ | मैत्रावरुणपृष्ठस्तोत्रम् | चतुर्विंशः | ८ मैत्रावरुणशस्त्रम् | मैत्रावरुणः |
| ९ | ब्रह्मपृष्ठस्तोत्रम् | चतुश्चत्वारिंशः | ९ ब्राह्मणाच्छंसिशस्त्रम् | ब्राह्मणाच्छंसी |
| १० | अच्छावाकपृष्ठस्तोत्रम्— | अष्टाचत्वारिंशः | १० अच्छावाकशस्त्रम् | अच्छावाकः |

## तृतीयसवने

| सङ्ख्या | स्तोत्रनाम | स्तोमसं० | शस्त्रनाम | शस्त्रकर्ता |
|---|---|---|---|---|
| ११ | आर्भवपवमानस्तोत्रम् | त्रिणवः | ११ वैश्वदेवशस्त्रम् | होता |
| १२ | उक्थ्यस्तोत्रम् | त्रयस्त्रिंशः | १२ आग्निमारुतशस्त्रम् | होता |
| १३ | ,, | त्रिणवः | १३ मैत्रावरुणशस्त्रम् | मैत्रावरुणः |
| १४ | ,, | एकविंशः | १४ ब्राह्मणाच्छंसिशस्त्रम् | ब्राह्मणाच्छंसी |
| १५ | ,, | सप्तदश | १५ अच्छावाकशस्त्रम् | अच्छावाकः |
| १६ | षोडशिस्तोत्रम् | एकविंशः | १६ षोडशिशस्त्रम् | होता |

## प्रथमे पर्याये

| सङ्ख्या | स्तोत्रनाम | स्तोमसं० | शस्त्रनाम | शस्त्रकर्ता |
|---|---|---|---|---|
| १७ | प्रथमं रात्रिस्तोत्रम् | पञ्चदश | १७ प्रथमं रात्रिशस्त्रम् | होता |
| १८ | द्वितीयं रात्रिस्तोत्रम् | ,, | १८ द्वितीयं रात्रिशस्त्रम् | मैत्रावरुणः |
| १९ | तृतीयं रात्रिस्तोत्रम् | ,, | १९ तृतीयं रात्रिशस्त्रम् | ब्राह्मणाच्छंसी |
| २० | चतुर्थं रात्रिस्तोत्रम् | ,, | २० चतुर्थं रात्रिशस्त्रम् | अच्छावाकः |

## द्वितीये पर्याये

| सङ्ख्या | स्तोत्रनाम | स्तोमसं० | शस्त्रनाम | शस्त्रकर्ता |
|---|---|---|---|---|
| २१ | प्रथमं रात्रिस्तोत्रम् | पञ्चदश | २१ प्रथमं रात्रिशस्त्रम् | होता |
| २२ | द्वितीयं रात्रिस्तोत्रम् | ,, | २२ द्वितीयं रात्रिशस्त्रम् | मैत्रावरुणः |
| २३ | तृतीयं रात्रिस्तोत्रम् | ,, | २३ तृतीयं रात्रिशस्त्रम् | ब्राह्मणाच्छंसी |
| २४ | चतुर्थं रात्रिस्तोत्रम् | ,, | २४ चतुर्थं रात्रिशस्त्रम् | अच्छावाकः |

## तृतीये पर्याये

| संख्या | स्तोत्रनाम | स्तोमसं० | शस्त्रनाम | शस्त्रकर्ता |
|---|---|---|---|---|
| २५ | प्रथमं रात्रिस्तोत्रम् | पञ्चदश | २५ प्रथमं रात्रिशस्त्रम् | होता |
| २६ | द्वितीयं रात्रिस्तोत्रम् | ,, | २६ द्वितीयं रात्रिशस्त्रम् | मैत्रावरुणः |
| २७ | तृतीयं रात्रिस्तोत्रम् | ,, | २७ तृतीयं रात्रिशस्त्रम् | ब्राह्मणाच्छंसी |
| २८ | चतुर्थं रात्रिस्तोत्रम् | ,, | २८ चतुर्थं रात्रिशस्त्रम् | अच्छावाकः |
| २९ | सन्धिस्तोत्रम् | त्रिवृत् | २९ आश्विनशस्त्रम् | होता |
| ३० | असोर्यामस्तोत्रम् प्रथमं | ,, | ३० प्रथमासोर्यामशस्त्रम् | होता |
| ३१ | ,, द्वितीयं | पञ्चदश | ३१ द्वितीयासोर्यामशस्त्रम् | मैत्रावरुणः |
| ३२ | ,, तृतीयं | सप्तदश | ३२ तृतीयासोर्यामशस्त्रम् | ब्राह्मणाच्छंसी |
| ३३ | ,, चतुर्थं | एकविंशः | ३३ चतुर्थासोर्यामशस्त्रम् | अच्छावाकः |

आहत्य त्रयस्त्रिंशत्स्तोत्राणि, तावन्ति शस्त्राणि, नव च स्तोमा इति। एवं ज्योतिष्टोमाख्यस्य सोमयागस्य स्तोत्रशस्त्रगतसङ्ख्यादीनि यथावत् प्रदर्शितानि ॥

## स्तोमविवरणम्, विष्टुतिप्रकारश्च

एवं संवत्सरसत्रान्तेषु तेषु तेषु सोमयागेषु सामवेदीयैरुद्गात्रादिभिर्ऋत्विग्भिः क्रियमाणानां स्तोत्राणां सङ्ख्या तदीयस्तोमाश्चोक्ताः। तत्र तत्तद्देवताभ्यस्तेषु तेषु ग्रहचमसादिषु पात्रेषु सोमरसे गृहीते तत्तद्देवता उद्दिश्य गानयुक्तैर्मन्त्रैः सदोनामकमण्डपे औदुम्बर्याख्यस्थूणासमीपे उपाविष्टैरुद्गातृप्रस्तोतृप्रतिहर्तृनामकैर्ऋत्विग्भिः क्रियमाणाः स्तुतिविशेषा एव स्तोत्रपदेनोच्यन्ते। स्तोत्रगतावृत्तिविशेष एव स्तोमपदाभिधेयः। तिसृष्वृक्षु एकं साम गीयते। तत् तासु यावत्कृत्व आवर्त्यते तावत्सङ्ख्याकस्स्तोमो भवति। ते च स्तोमाः—त्रिवृत्, पञ्चदशः, सप्तदशः, एकविंशः, त्रिणवः, त्रयस्त्रिंशः, चतुर्विंशः, चतुश्चत्वारिंशः, अष्टाचत्वारिंशः इति नवप्रकाराः। इमे एव प्रकारास्तत्तत्क्रतुषु क्वचिदभ्यस्ताः क्वचिच्चानभ्यस्ताः क्रियन्ते तत्तद्विधिमनुसृत्य। त्रिवृत् इति नवसङ्ख्योच्यते। त्रिणव इति सप्तविंशतिः। अन्यत् यथाश्रुतमेव ॥

---

इयं च त्रिवृदादिसङ्ख्या वारत्रयमावृत्ताभिस्तिसृभिर्ऋग्भिस्सम्पादनीया। तद्यथा—माध्यन्दिनपवमानाख्यमेकं स्तोत्रम्। तच्च पञ्चदशस्तोमकम्। सा च सङ्ख्या तिसृणामृचां पर्यायत्रयगानेन सम्पादनीया। तत्र प्रथमे पर्याये—प्रथमामृचं त्रिः, द्वितीयां सकृत्, तृतीयां च सकृत्। एवं प्रथमपर्याये पञ्चवारमावृत्तिर्जाता। द्वितीये पर्याये—प्रथमां सकृत्, द्वितीयां त्रिः, तृतीयां सकृच्च गायेत्। एवं द्वितीये पञ्चवारमावृत्तिः। तृतीये पर्याये—प्रथमां सकृत्, द्वितीयां सकृत्, तृतीयां त्रिः। एवं पञ्चवारम्। मिलित्वा पञ्चदशसङ्ख्या सम्पन्ना। गानगतप्रकारविशेषो विष्टुतिरित्युच्यते। एकैकस्मिन्नपि स्तोमेऽनेका विष्टुतय इति मिलित्वा अष्टाविंशतिसङ्ख्याका विष्टुतयस्सन्ति। गानकाले च गणनार्थं कुशानिक्षेपः कार्यः। तत्रोद्गाता सदोनामकमण्डपमध्ये निखातामौदुम्बरीं वस्त्रसंवेष्टितामपाश्रित्योत्तराभिमुख उपविशेत्। तस्य दक्षिणभागे (उद्गातुः पूर्वस्यां दिशि) प्रस्तोता पश्चिमाभिमुख उपविशेत्। वामभागे (उद्गातुः पश्चिमायां दिशि) प्रतिहर्ता पूर्वाभिमुख उपविशेत्। एवं तैरुपविष्टैर्गाने क्रियमाणे प्रस्तोता (उद्गातुरनन्तर ऋत्विक्) साम्नो गानमारभमाणः आरम्भकाले पूर्वोक्ताः कुशा एकैकस्यामावृत्तौ, एकैकशो भूमौ निक्षिपेत्। तीक्ष्णाग्रः प्रादेशमात्रः उदुम्बरवृक्षीयः एकत्र तष्टो लघुकायः काष्ठविशेषोऽत्र कुशाशब्देनोच्यते। ताश्च तासु तासु विष्टुतेषु विभिन्नप्रकारेण निक्षेपणीयाः। ते च प्रकारविशेषा अधस्तन्या पट्टिकया स्पष्टीभविष्यन्ति। तत्र त्रिवृत्स्तोमे न विशेषोऽस्तीति न कुशानिक्षेपः क्रियते॥

२ पञ्चदशस्तोमस्य तिस्रो विष्टुतयः। तत्र—

प्रथमा विष्टुतिः—

प्र॰ पर्यायः द्वि॰ पर्यायः तृ॰ पर्यायः

तृतीया ऋक्

द्वितीया ऋक्

प्रथमा ऋक्



द्वितीया विष्टुतिः—

प्र. प. द्वि. प. तृ. प.

तृतीया ऋक्

द्वितीया ,,

प्रथमा ,,

तृतीया विष्टुतिः—

प्र. प. द्वि. प. तृ. प.

तृतीया ऋक्

द्वितीया ,,

प्रथमा ,,

३ सप्तदशस्तोमस्य सप्त विष्टुतयः

तत्र प्रथमा—

प्र. प. द्वि. प. तृ. प.

तृतीया ऋक्

द्वितीया ,,

प्रथमा ,,

४ एकविंशस्तोमस्य चतस्रो विष्टुतयः

तत्र प्रथमा—

प्र. प. द्वि. प. तृ. प.

तृतीया ऋक्

द्वितीया ,,

प्रथमा ,,

५ त्रिणवस्तोमस्य (२७) द्वे विष्टुती

तत्र प्रथमा—

प्र॰ प॰ द्वि॰ प॰ तृ॰ प॰

तृतीया ऋक्

द्वितीया ,,

प्रथमा ,,

६ त्रयस्त्रिंशस्तोमस्य पञ्च विष्टुतयः

तत्र प्रथमा—

प्र॰ प॰ द्वि॰ प॰ तृ॰ प॰

तृतीया ऋक्

द्वितीया ,,

प्रथमा ,,

७ चतुर्विंशस्तोमस्यैका विष्टुतिः

तत्र प्रथमा—

प्र॰ प॰ द्वि॰ प॰ तृ॰ प॰

तृतीया ऋक्

द्वितीया ,,

प्रथमा ,,

८ चतुश्चत्वारिंशस्तोमस्य तिस्रो विष्टुतयः

तत्र प्रथमा विष्टुतिः—

| | प्र. प. | द्वि. प. | तृ. प. |
|---|---|---|---|
| तृतीया ऋक् | | | |
| द्वितीया „ | | | |
| प्रथमा „ | | | |

९ अष्टाचत्वारिंशस्तोमस्य द्वे विष्टुती

तत्र प्रथमा विष्टुतिः—

| | प्र. प. | द्वि. प. | तृ. प. |
|---|---|---|---|
| तृतीया ऋक् | | | |
| द्वितीया „ | | | |
| प्रथमा „ | | | |

एवं पञ्चदशाद्यष्टाचत्वारिंशान्तानां स्तोमानामष्टानामनेकप्रकारासु विष्टुतिषु प्राथमिकी विष्टुतिरेकैका स्वरूपेणोल्लिखिता । इतरासां स्वरूपमस्मत्कृतताण्ड्यमहाब्राह्मणभूमिकातोऽवगन्तव्यम् । ग्रन्थगौरवभयात्तु नोल्लिखितमत्र । अत्र सर्वत्र तत्तत्स्तोत्रारम्भे प्रस्तोता स्वस्य पुरतः उदगग्राः पश्चिमापवर्गाः कुशा निक्षिपेत् गणनार्थम् । तत्र प्रथमे पर्याये प्रथमाया ऋचस्तत्तत्सङ्ख्याकाः कुशाः तिरश्चीना निक्षेपणीयाः । द्वितीयस्या अनूचीनाः । तृतीयस्याः पुनस्तिरश्चीनाः । एवमेव द्वितीयतृतीययोरपि पर्याययोरिति बोध्यम् । अत्र कुशाशब्दः आकारान्तस्त्रीलिङ्गः । अयमेव च स्तोमानां गणनाप्रकारो ज्योतिष्टोमादिषु सहस्रसंवत्सरान्तेषु सर्वेष्वपि सोमयागेष्वित्यवगन्तव्यम् । सङ्ख्याया अविस्मरणाय अयं प्रकार आदृतः ॥

इति महामहोपाध्याय-शास्त्ररत्नाकर-पण्डितसार्वभौम-श्रीचिन्नस्वामिशास्त्रि-विरचिते यज्ञतत्त्वप्रकाशे सोमयागादिनिरूपणाख्यः द्वितीयो भागः ॥

॥ श्रीः ॥

॥ श्रीगणेशाय नमः ॥

# ॥ यज्ञतत्त्वप्रकाशः ॥

## महामहोपाध्यायश्रीचिन्नस्वामिशास्त्रिविरचितः

## चयनादिनिरूपणरूपः

### ॥ तृतीयो भागः ॥

### चयनम्

अथेदानीमग्निचयनं निरूप्यते। पशुयागेषु सोमयागेषु योत्तरवेदिरुक्ता तत्रैव आहवनीयं निधाय सर्वे होमाः कर्तव्या इत्ययमेकः पक्षः। तस्या एवोपरि स्थण्डिलविशेषं कञ्चन निर्माय तदुपर्याहवनीयमवस्थाप्य तत्र होमा इत्यपरः पक्षः। तत्र तादृशस्थण्डिलनिर्माणप्रकारः 'चयनम्' इति, निर्मितं, स्थण्डिलम्, 'चितिः' इति च व्यवह्रियते वैदिकसम्प्रदाये। सा चितिर्द्विविधा—क्षुद्रचितिः, महाग्निचितिश्चेति। शर्कराख्यैः क्षुद्रपाषाणैः शतोपशतसङ्ख्याकैः निर्मीयमाणा अल्पाकारा क्षुद्रचितिः। बृहतीभिस्सहस्रसङ्ख्याकाभिरिष्टकाभिः षड्विधाभिर[1]खण्डिताभिस्तत्तदाकारतया निर्मीयमाणः स्थण्डिलविशेषो महाग्निचितिः। तत्र क्षुद्रचितयः षट्। तासां विधयो मन्त्राश्च[2] तैत्तिरीयारण्यके तैत्तिरीयब्राह्मणान्तर्गते काठकाख्ये भाग एव च दृश्यन्ते। नान्यत्र। तासां विनियोगं प्रायेण निरूढपशुयागादौ एव याज्ञिकाः

---

१. षोडशी, अध्या, पाद्या, पक्ष्या, पक्षमध्या, पक्षाग्र्या इति षड्विधा इष्टकाः। गार्हपत्यचितेरिष्टका एतदपेक्षया विभिन्नप्रकारा एव भवेयुः।

२. चित्युपयुक्ता मन्त्राः ब्राह्मणानि च प्रायेण आध्यात्मिकभावपूर्णानीत्यस्माभिः सप्रमाणमुपपादितं यज्ञतत्त्वालोके। क्षुद्रचितिषु तु बाहुल्येन तन्मयतैवोपलभ्यते। संहिताब्राह्मणभागापेक्षया आरण्यकभागोऽध्यात्मविद्योपबृंहित इति स्पष्टमेव। अत एव ब्राह्मणोपनिषदः सर्वा अपि आरण्यकान्तर्गता एवाधीयन्ते। अतश्च ज्ञानकर्मोभयसंवलनात्मिकानां क्षुद्रचितीनाम् आरण्यकेषु आम्नानं न कदापि दोषाय कल्पते। अतस्तासां प्रामाण्यविषयेऽनुष्ठानविषये वा न कियानपि न्यूनाधिकभावः सांहितिकचयनापेक्षया।

कुर्वन्ति। ताश्च एकदिनसाध्या एव। तत्साधनभूतानां क्षुद्रपाषाणानामल्पत्वेन, तैर्भूमेरुपरि स्थण्डिलनिर्माणस्य अशक्यतया उत्तरवेदिमध्येऽवटं कृत्वा तत्रैव तानुपधाय तदुपर्येव आहवनीयमुपधाय यजेत। महाग्निचितयस्तु भूमेरुपर्येव क्रियन्ते। ताश्चैकादशविधास्तैत्तिरीय उक्ताः। तासामेव च प्रमाणविवर्धनेनैकोत्तरशतविधत्वं वाजसनेयिशाखायामुक्तम्, आपस्तम्बादिभिर्निरूपितं च। परं तासु सर्वासु श्येनचितिरेव सुपर्णचित्यपरनामधेया प्राथम्यं प्राधान्यं च आवहति। अतः सैव याज्ञिकैर्यथायथमनुष्ठीयते सति सामग्रीसमवधाने। अन्यास्तु नाममात्रावशिष्टाः। यथावदवगमोऽपि न तासां सुलभः। तैत्तिरीये शाखान्तरेषु च श्येनचितिमधिकृत्यैव प्रवृत्ता मन्त्रा ब्राह्मणानि च। सा श्येनचितिराकाशे पक्षौ प्रसार्य डयमानपक्ष्याकृतिश्चीयते। तत्र पञ्च प्रस्ताराः। एकैकस्मिन् प्रस्तारे शतद्वयमिष्टकानाम्। पञ्चसु प्रस्तारेषु मिलित्वा सहस्रमिष्टका भवन्ति। स्वरूपमस्या अन्ते पृथक् चित्ररूपेण प्रदर्शितम्। अत्र सर्वेष्वपि प्रस्तारेषु नैकरूप्येणेष्टकानामुपधानम्। किं तु प्रथमतृतीयपञ्चमेष्वेकरूपतया, द्वितीयचतुर्थयोरेकरूपतया। तथा सत्येव प्रस्ताराणां परस्परं संलग्नता स्यात्। इयमाहवनीयनिधानार्था चितिः। एवमेव गार्हपत्यार्थमपि चितिः सम्पादनीया। सापि प्रथमानुष्ठाने पञ्चप्रस्तारैव। परमिष्टकानामेकरूपतैव तत्र। दीर्घचतुरश्राकारा च सा, न पक्षिरूपा। एवं पञ्चभिः प्रस्तारैर्निर्मिता चितिर्जानुदघ्नप्रमाणा स्यात्। त्रिंशदङ्गुलं जानुदघ्नप्रमाणमिति सूत्रकाराः। तस्य पञ्चमोऽशः इष्टकानामुत्सेधः। एवं च षडङ्गुलोन्नता एका इष्टका भवति। तिर्यक्प्रमाणानि इष्टकाचित्र एव तत्तदिष्टकास्वरूपनिकटे उल्लिखितानि। एवं सामान्यतः चयनसम्बन्धिनो विषयाः कथिताः। तदनुष्ठानप्रकारः सङ्क्षेपतोऽथ निरूप्यते॥

## चयने उखासम्भरणम्

यस्मिन् वसन्तेऽग्निं चेष्यमाणो भवति ततो वत्सरात् पूर्वम् अमावास्यायां पौर्णमास्यां वा प्रातरग्निहोत्रं हुत्वा चयनार्थं सङ्कल्पं कुर्यात्—साग्निचित्येन ज्योतिष्टोमेन सर्वपृष्ठ-सर्वस्तोम-अप्तोर्यामादिना वा यक्ष्य इति। ततः प्रकृत्यग्निष्टोमादिवत् सोमप्रवाकवरण-मधुपर्कदानादिदेवयजनयाचनान्तं कृत्वा, गार्हपत्यादग्निं गृहीत्वा आहवनीयायतने निक्षिप्य प्रज्वलय्य देवेभ्यः अग्नये सवित्रे च कांश्चन होमान् हुत्वा

खनित्रम्, अश्वरशनां, गर्दभरशनां च गृहीत्वा ताभ्यामश्वं गर्दभं च बद्ध्वा, कृष्णाजिनं पुष्करपर्णं मुञ्जतृणनिर्मितां रज्जुं, कमण्डलुं स्रुवं जुहूं हिरण्यं च गृहीत्वा, अश्वं पुरतो गमयन्तः अध्वर्युब्रह्मयजमानाः तत्पश्चात् गर्दभसहिता उखानिर्माणयोग्या यत्र मृदस्ति तत्र गत्वा तत्र वल्मीकमुद्धृत्य तमुपस्थाय मृत्खननस्थानमश्वेन आक्रमय्य, अश्वपादनिक्षेपस्थले हिरण्यं निधाय हुत्वा मृत्खनमभ्र्या त्रिः परिलिख्य तं देशं खात्वा, तत उद्धृतां मृदं पुष्करपर्णे विवेष्ट्य, मृत्खनस्योत्तरभागे कृष्णाजिनमास्तीर्य तत्र पद्मपत्रमुत्तानं वितत्य तत्र मृदं सम्भृत्य मृदमभिमृश्य मृत्खनेऽप आनीय, तन्मृदन्तरेण अभिपूर्य समृदं कृष्णाजिनमादाय मौञ्ज्या रज्ज्वोपनह्य, हुत्वा गर्दभस्य पृष्ठ आधाय, अश्वरशनां गर्दभरशनां च गृहीत्वा पूर्ववत् अग्रेऽश्वं गमयन्तः त्वरमाणाः प्रत्यागत्य विहारस्योत्तरभागे परिश्रिते स्थाने बद्धामेव मृदं पुष्पफलवतीष्वोषधीषु निक्षिप्य, बन्धनं विस्रस्य, तत्र मृदि उखादृढीकरणार्थानि स्फुटितघटादिशकलानि, वेण्वङ्गारान्, व्रीहितुषान्, पलाशकषायं, शर्कराः, पिष्टाः, कृष्णाजिनाजलोमानि, अन्यानि च तादृशानि वस्तूनि सम्मेल्य, स्थापयेयुः। ततो यजमानस्तां मृदम् अध्वर्यवे दद्यात्। ततोऽध्वर्युः स्वयमेवोखां निर्मायात्। सा च चतुरश्रा परिमण्डला वा प्रादेशमात्रोर्ध्वप्रमाणा, अरत्निमात्रतिर्यक्प्रमाणा, बिलस्य अधस्तात् द्व्यङ्गुलपरिमिते देशे रास्नावती द्विचतुष्षट्स्तनान्विता च कार्या। ततस्तामुत्तरतः सिकतासु प्रतिष्ठाप्य, मित्राय विनिवेद्य, तस्या एव मृदः अषाढाख्यामेकां चतुरश्रां रेखात्रययुतामिष्टकां निर्माय, गार्हपत्यादग्निं गृहीत्वा तमश्वशकृता प्रदीप्य तेनोखां धूपयित्वा तमग्निं विसृज्य, अग्रेण गार्हपत्यमवटं खात्वा, तत्रोखापाकार्हाणि वस्तूनि प्रक्षिप्य, तदुपर्युखामवधाय, तया सहाषाढाख्यामपीष्टकां निक्षिप्य, पाकसाधनैर्वस्तुभिः प्रच्छाद्य, गार्हपत्यादग्निमाहृत्य, तदुपर्यभ्याधाय, ते तथा पक्त्वा यथा लोहिते भवतः, उद्वास्य, अजापयसोखां सिक्त्वा श्लक्ष्णीकृत्य, उखामषाढेष्टकां च सुरक्षितं निक्षिपेत्॥

## चयने वायव्यपशुयागः

तदनन्तरं वायुदेवताकं पशुयागमनन्तरपूर्णिमायाम् अनन्तरामावास्यायां वा निरूढपशुबन्धयागवत् चयनाङ्गतया अनुतिष्ठेत्। अत्र

वायुर्नियुत्वान् देवता । पशुपुरोडाशे तु प्रजापतिर्[1]देवतेति विशेषः । पशोः शिरश्छित्त्वा मृदा प्रलिप्य सुरक्षितं निदध्यात् । अस्येष्टकोपधाने उपयोगो भविष्यति । ततोऽग्निष्टोमवत् प्रवर्ग्यसम्भरणं कुर्यात् । तच्च पर्वण्येव भवति । तदानीमेव चयनौपयिका इष्टका निर्माय अग्निं मथित्वा तेन ताः पचेत् । यथा ताः कृष्णा वक्रा अतिपक्का अपक्का वा न भवेयुः, यथा च लोहितवर्णा एव स्युः तथा पक्तव्याः । ततो दीक्षारम्भः । तत्र दीक्षाविषये दिनत्रयप्रभृति संवत्सरपर्यन्ता बहवः पक्षाः श्रुताः । दिनत्रयदीक्षापक्षे वासन्त्यां शुक्लषष्ठ्यां दीक्षारम्भः कर्तव्यः । पक्षान्तरेषु यथा वासन्त्यां पूर्णिमायां सुत्या स्यात् तथा आरम्भः कार्यो दीक्षायाः ॥

## उख्याग्निनिष्पादनधारणादि

यस्मिन् दिने दीक्षारम्भं चिकीर्षति तस्मिन् दिने प्रातरग्निहोत्रं कृत्वा, नान्दीश्राद्धं यागादीनां द्रव्यविभागनिर्देशं च कृत्वा गृह एव दीक्षणीयेष्टिं कुर्यात् । सा च त्रिहविष्का—अग्नये वैश्वानराय द्वादशकपालः पुरोडाशः, अग्नाविष्णुभ्यामेकादशकपालः पुरोडाशः, अदित्यै चरुश्चेति । पत्नीसंयाजान्तां तामनुष्ठाय, ततः सोमयागवत् प्राग्वंशनिर्माणादिकं मुष्टिकरणावधिकं क्रियाकलापमनुष्ठाय, मुञ्जतृणैः शणतृणैर्वा उखामापूर्य, तामाहवनीयस्योपर्यविश्रित्य परितोऽङ्गारैः प्रदीपयेत् । उखामध्ये सुखदाह्यानि च वस्तून्याज्येन अक्त्वा प्रक्षिपेत् । यथा तप्ताया उखाया अन्तःस्थानि वस्तूनि स्वयं दह्येरन् तथा तां तापयेत् । अन्तःस्थेषु तृणेष्वतितप्तेषु तत्र अग्निरुत्पद्यते । स उख्योऽग्निरित्युच्यते । उख्ये जाते आहवनीयमग्निमुपशमय्य, उख्येऽग्नौ वैकङ्कतीं शमीमयीं च समिधावाधाय, ज्वलन्तं तमग्निमुपस्थाय, पुनरौदुम्बराश्वत्थादिभिः काष्ठैरग्निमादीप्य मुञ्जतृणनिर्मिते हस्तषट्कपरिमितदैर्घ्ययुते शिक्ये साग्निम् उखामवधाय, सुवर्णनिर्मितं हस्ततलपरिमितमेकविंशतिनिर्बाधयुतं वर्तुलाकारं रुक्मं यजमानस्य कण्ठेऽध्वर्युरवमुञ्चेत् । ततो यजमानः शिक्यपाशमपि कण्ठेऽवमुच्य, तदुपरि कृष्णाजिनं स्कन्धयोर्निधाय, उख्यमादायोत्थाय, उख्यं नाभेरुपरि धारयमाणः चतुरो विष्णुक्रमान् प्राचः क्रामेत् । प्राङ्मुखः सन् चत्वारि पदान्यग्रतो गच्छेत् । तदेव विष्णुक्रमणमित्युच्यते ।

---

१. सर्वत्र पशुयागेषु पश्वङ्गभूता एव देवताः पुरोडाशाङ्गभूताः प्रायेण भवन्ति । अत्र तु न तथा । पशुदेवता वायुः, पुरोडाशदेवता प्रजापतिः ।

ततः प्रदक्षिणं पर्यावृत्य रुक्मं कृष्णाजिनं चोन्मुच्य निधाय शिक्यपाश-मुन्मुच्य, पूर्वसज्जितायामौदुम्बर्यामासन्द्यां प्रादेशमात्रपादायां मौञ्जविता-नायां मृदा लिप्तायामुख्यं सादयित्वोपस्थाय, पुनः काष्ठैरुपसमिन्धीत। ततो मुष्टीकरणादिसौमिकपदार्थान् सनीहारप्रेषणान्तान् कृत्वा जाग्रत् तां रात्रिमतिवाहयेत् । श्वोभूते प्रातरुत्थाय सोमपरिवेषणान्ते कर्मणि कृते यजमान उख्यमाभिमुपतिष्ठेत। ततो मध्यन्दिने मध्यरात्रे च व्रतग्रहणा-दिकं प्रकृतिवदेव। एवं यावद्दीक्षं पूर्वेद्युर्विष्णुक्रमणम्, उत्तरेद्युरग्न्यु-पस्थानं च पर्यायेण कुर्वन्नासीत । यदहर्दीक्षासमाप्तिः तदहर्विष्णुक्रमण-मुख्योपस्थानं चेत्युभयं कृत्वा उख्यमुद्यम्य शकटेऽवस्थाप्य, गार्हपत्य-दक्षिणाग्नी अपि साक्षादेव[1] शकटेऽवस्थाप्य स्वयमपि सपत्नीकः शकट-मारुह्य देवयजनस्थानं प्रति प्रयायात् । प्राप्य देवयजनं गार्हपत्यं दक्षिणाग्निं च स्वस्वायतने निधाय, गार्हपत्यस्य पुरत उख्यं निधाय, तत्रौदुम्बरीं समिधमादधाति ॥

## [2]गार्हपत्यचितिमानादि

ततो गार्हपत्यस्थण्डिलचयनार्थं हस्तचतुष्टयपरिमितां भूमिं प्रोक्षणोद्धननादिभिः संस्कृत्य तं देशमेकविंशत्या शर्कराभिः (क्षुद्रपाषाणैः) परिश्रित्य, परिश्रितदेशे प्रागायता एकविंशतिमिष्टकाः प्रथमप्रस्तारे उपदध्यात् । द्वितीयप्रस्तारे तद्व्यत्यासेन तावतीरेवेष्टका उदगायता उपदध्यात्। प्रथमप्रस्तारे प्रागायतास्तिस्रो रीतयः । एकैकस्यां रीतौ सप्तेष्टकाः। द्वितीयप्रस्तारे उदगायता इष्टकाः सप्त रीतयः। एकैकस्यां रीतौ तिस्र इष्टकाः। एवं प्रथमतृतीयपञ्चमेषु प्रस्तारेषु प्रागायता इष्टकाः, द्वितीयचतुर्थयोः प्रस्तारयोरुदगायताश्चेष्टका उपदध्यात् । एकैकस्मिन् प्रस्तारे एकविंशतिरिष्टका इत्याहत्य पञ्चस्वपि प्रस्तारेषु पञ्चोत्तरं शतमिष्टका भवन्ति गार्हपत्यचितौ। इष्टकाश्च दैर्घ्ये द्वात्रिंशाङ्गुलमिताः विस्तारे पादोनचतुर्दशाङ्गुलमिताश्च भवन्ति। ($३२ \times १३\frac{३}{४}$)। एतासामुपधान-रीतिस्तु प्रतिकृतौ द्रष्टव्या। तत्रैकैकं प्रस्तारमुपधाय चात्वालदेशादार्द्रां

---

१. अत्रव अग्नेर्देवयजनं प्रति साक्षादाहरणम्। अन्यत्र तु अरण्यादि-समारोपणेनैव।

२. प्रथमतो गार्हपत्यस्य चयनम् । तत आहवनीयस्य । दक्षिणाग्नेः स्थण्डिलं नास्ति ।

मृदं सिकतां वा आहृत्य उपहितस्य प्रस्तारस्योपरि निवपेदालिम्पेद्वा सन्धीनामदर्शनाय । एवं सर्वप्रस्तारेषु पांसुनिवापः कार्यः । सेयं गार्हपत्यचितिः ॥

## गार्हपत्यचितेरुपरि उख्याग्निस्थापनम्

एवं गार्हपत्यचितिमुपधाय, तदुपरि उखागतमग्निं सर्वमपि सन्निवपति वर्धयति च तं काष्ठशकलैः । ततस्तं मन्त्रैरुपस्थाय, रिक्तामुखां दधिमधुसिकतादिभिरापूर्य, तां शिक्यादपाकृत्य, शिक्यं, रुक्मसूत्रं, आसन्दीं, तुषपक्काः कृष्णास्तिस्र इष्टकाश्चादाय, नैर्ऋत्यां दिशि गत्वा, क्वचिदूषरप्रदेशे शिक्यं निधाय, शिक्यपाशस्योपरि ताः कृष्णास्तिस्र इष्टका दक्षिणापवर्गा निधाय, शिक्यजालेन ताः प्रच्छाद्य, तासां दक्षिणतो रुक्मसूत्रमासन्दीं च निधाय, ते अभिमन्त्र्योपस्थाय, पुनस्तत् सर्वमप्रतीक्ष्यैव देवयजनमागत्य शुद्ध्यर्थं मार्जनं कृत्वा गार्हपत्यमुपतिष्ठेरन्नध्वर्युब्रह्मयजमानाः । अनन्तरं प्रकृतिवत् प्रायणीयेष्टिं कृत्वा, सौमिकीं महावेदिं विमाय, सोमं क्रीत्वा, आतिथ्येष्टिं कृत्वा, उत्तरवेदेरुपरि इष्टकोपधानार्थं वेणुदण्डेन मानं कुर्यात् । प्रसारितपक्षद्वयपक्षिसदृशः स्थण्डिलस्याकार इत्युक्तम् । स्थण्डिले च आत्मा, दक्षिणः पक्षः, उत्तरः पक्षः, पुच्छं, शिर इति पञ्च भागाः । तत्र आत्मा मध्यस्थानम् । दक्षिणोत्तरभागयोः पक्षद्वयम् । पुरतश्शिरः, पश्चात् पुच्छमिति भागसन्निवेशः । तत्र आत्मा चतसृष्वपि दिक्षु पुरुषैकप्रमाणः (१२० अङ्गुलमितः)। पक्षौ च दक्षिणोत्तरतः प्रत्येकं किञ्चिदधिकपुरुषद्वयप्रमाणकः (२४७½ अं) । पुच्छं च सान्तरालं सपादपुरुषप्रमाणम् (१५० अं)। शिरः सग्रीवं पुरुषैकप्रमाणम् । एवंरीत्या दक्षिणोत्तरतः पञ्चदशाङ्गुलाधिकपुरुषपञ्चकप्रमाणा (६१५ अं) पूर्वपश्चिमतः सपादपुरुषत्रयप्रमाणा (३९० अं) उत्सेधतस्त्रिंशदङ्गुला च आहवनीयचितिरिति सिध्यति । इदं च सार्धसप्तविधमित्युच्यते । एवं गार्हपत्यचितिः षण्णवत्यङ्गुलायामविस्तारा जानुदघ्नोत्सेधा भवति । प्रमाणमिदं गार्हपत्याहवनीयचित्योर्यजमानस्य प्रथमचयन एव भवति । द्वितीयावृत्तौ गार्हपत्यचितेर्ह्रासः, आहवनीयचितेर्वृद्धिश्च भवतः । तौ यथा—द्वितीयचयने गार्हपत्यचितेः त्रयः प्रस्ताराः, त्रिषष्टि(६३)-रिष्टका एव च भवेयुः । तृतीयचयने एक एव प्रस्तारो भवेदिष्टकाश्चैकविंशतिः । आहवनीयचितेस्तु—द्वितीयचयने द्विषड्स्रमिष्टका दश प्रस्ताराः

नाभिमितोत्सेधश्च भवेयुः । तृतीयचयने त्रिषहस्रमिष्टकाः पञ्चदश प्रस्ताराः, आस्यदघ्नोत्सेधश्चेति विशेषः । नैकविधं चयनमतोऽधिकं कुर्यात् । विधान्तराणि त्वनुष्ठातुं शक्यन्ते । न तासां स्वरूपाण्यत्र विवृतानि ॥

## चयनस्थलकर्षणादि

एवमाहवनीयचितियोग्यं स्थलमुत्तरवेद्या उपर्येव विमाय, अध्वर्यु-ब्रह्मयजमानास्तत् स्थानमधिष्ठाय, लाङ्गलमेकं, षड्वा द्वादश वा बलीवर्दांश्च आनाय्य, लाङ्गले बलीवर्दान् षट् द्वादश वा बद्ध्वा तेन लाङ्गलेन तत् स्थलं कृष्ट्वा (अध्वर्युरेव कृषेत्, नान्येन कर्षयेत्) बलीवर्दानुन्मुच्य, तान् अध्वर्यवे दत्त्वा, कृष्टासु ,सीतापद्धतिषु जलमासिच्य द्वादशसु सीतापथेषु ओषधीर्ग्रामोद्भवा वपेत् । ताश्च—तिलाः, माषाः, व्रीहयः, यवाः, प्रियङ्गवः, अणवः, गोधूमाः । यासां ग्रामीणैः पुरुषैः ग्रामेष्वेवो-त्पादनं (कृषीवलैः) क्रियते ताः सप्त ग्राम्या ओषधयः । एवमकृष्टे स्थले पूर्ववदुदकमासिच्य आरण्या ओषधीः सप्त तत्र वपेत् । ताश्च—वेणवः, श्यामाकाः, नीवाराः, अरण्यतिलाः, अरण्यगोधूमाः, मर्कटकाः, अरण्य-मुद्गाः (गार्मुताः) इति सप्त । धान्यानामेषां भूमिकर्षणादिकमन्तरा अकृष्टायामेव भूमावुत्पत्तिः । अतो धान्यानीमान्यकृष्टपच्यानीत्युच्यन्ते । अत एव अत्राप्यकृष्ट एव स्थल एतेषां वपनमुक्तम् । कर्षणकालेऽग्नि-चयनार्थात् क्षेत्रात् चतसृष्वपि दिक्षु ये लोष्टा बहिर्भूतास्तानग्निक्षेत्र एव प्रत्यस्य, धान्यवापनस्थानं हस्तेन अभिमृश्य, तदुपर्युत्तरवेदेरुपवापं कृत्वा तदुपरि सिकताः न्युप्य, चयनीयं तत् स्थानं शर्कराभिः (क्षुद्रपाषाणैः) परिश्रित्य मध्यस्थाः सिकताः समीकुर्यात् । एतावत्पर्यन्तं कृत्वा, अनन्तरं प्रकृताविव पत्नीयजमानयोः व्रतप्रदानं, तानूनप्त्राज्यस्पर्शनं[1], सोमाप्यायनं, द्यावापृथिवीनमस्कारादिकं च यथावत् कृत्वा, प्रवर्ग्योपसदावनुतिष्ठेत् प्रकृतिवदेव । पूर्वं प्रवर्ग्यानुष्ठानं तत उपसदनुष्ठानम् । एतच्च वैपरीत्येनापि कर्तुं शक्यत इति ज्योतिष्टोम एवोक्तम् । उपसदोऽन्ते सुब्रह्मण्याह्वानमपि प्रकृतिवदेव ॥

---

१. वेदिमध्ये पात्रविशेषस्थापितस्य घृतस्य संज्ञा तानूनप्त्रमिति । ऋत्विजां यजमानस्य च यावत्क्रतुसमाप्ति परस्परं स्नेहाय, तत्स्पर्शनं विहितं प्रकृतौ । तदेव अत्राभिसंहितम् ।

प्रथमचितेरुपधानम्

तत उत्तरवेदेरुपरि विमिते स्थले चयनमारभेत। तत्र अध्वर्युश्चयनकर्ता भवेत्, यजमान एव वा स्वहस्तेन चयनं कुर्यादिति पक्षद्वयम्। चयनं चेष्टका यथासौकर्यं खण्डयित्वा चितेर्यथाभिलषितमाकारो न कदापि सम्पादनीयः। षट्प्रकाराभिरिष्टकाभिस्तत्तत्स्थलोपधानयोग्यतया निर्मिताभिरखण्डिताभिः चितेराकारसम्पादनम्। इष्टकानां षट् प्रकाराः पूर्वं निर्दिष्टाः, प्रदर्शयिष्यन्ते च प्रतिकृतिचित्रे। आकाशे पक्षौ प्रसार्य डयमानस्य पक्षिणो यादृशं स्वरूपं तादृशमेव स्वरूपं चयनेन भूमौ निष्पादयेत्। तदपि न पक्ष्यन्तरसदृशम्। किं तु श्येनसुपर्णसरूपमेवेत्यादि बोध्यम्॥

एवं चेष्यन् प्राग्वंशमण्डपस्य अग्रे आनडुहे चर्मणि प्रथमचित्यर्था इष्टकाः स्थापयित्वा, अध्वर्युब्रह्मयजमानाः अश्वमग्रतः कृत्वा, चितिस्थलं गत्वा स्थलमध्ये दर्भस्तम्बं निखाय, तमश्वेन आक्रमय्य, अश्वपादनिक्षेपस्थाने पद्मपत्रमुत्तानमुपधाय, तदुपरि रुक्ममुपधाय, तस्मिन् सुवर्णनिर्मितं पुरुषमुपरिमुखं प्राक्शिरसम् उपधाय, तमभिमन्त्र्य, तस्य दक्षिणत आज्यपूर्णां कार्ष्मर्यमयीं जुहूं, तस्य उत्तरतो दधिपूर्णामौदुम्बरीं च तामुपधाय, ते उपस्थाय, इष्टकामेकामविदुषा (मूर्खेण) ब्राह्मणेन चितिमध्य उपधापयीत। ततस्तेन यजमानाद्गृहीत्वा दत्तं वरमध्वर्युः प्रतिगृह्णीयात्। ततः परं प्रथमदिनानुष्ठितवायव्यपशोः शिरसः, कूर्मस्य जीवतः, उलूखलस्य सर्वौषधिपूर्णस्य, मुसलस्य चोपधानं च कृत्वा ततो यथाक्रममिष्टकोपधानेन प्रथमचितिं सम्पादयेत्। तत्र क्रमादयः सूत्रतोऽवगन्तव्याः। एवं प्रथमचितिं समाप्य, आपराह्णिकीभ्यां प्रवर्ग्योपसद्भ्यां प्रचर्य सुब्रह्मण्याह्वानान्तं कृत्वा विरमेत्। रात्रौ यजमानस्य व्रतग्रहणम्। एवं दीक्षात्रयपक्षे दीक्षातोऽनन्तरस्मिन् (चतुर्थे) दिने चयनमारभ्य, एकैकस्मिन् दिने एकैका चितिरिति आदितश्चतुर्थादिषु नवमान्तेषु षट्सु दिनेषु पञ्च चितय उपधीयन्ते। अत्र चयने षडुपसदः।

१. कण्ठस्य अधस्तात् पाटलवर्णः उपरिष्टात् श्वेतः पक्षिविशेषः सुपर्णपदवाच्यः। खगोऽयं मत्स्याशी बहुलमनूपदेशेष्वेव वसति। न धन्वसु शुष्केषु वा प्रदेशेषु। गरुडपदाभिधेयोऽयं भगवतो विष्णोर्वाहनमिति मत्वा यत्र कुत्रापि दृष्ट्वैवैनं प्रणमन्ति तद्देशस्था जनाः। तद्दर्शनं च कल्याणकरं मन्यते। श्येनस्तु प्रसिद्ध एव।

२. वर्तुलाकारं (सूर्यसदृश) सुवर्णखण्डं रुक्ममित्युच्यते।

एकस्या उपसदो दिनद्वयेऽनुष्ठानमावृत्त्या । पञ्चम्या उपसदो दिने मध्याह्ने सावशेषां पञ्चमीं चितिमुपधाय चितेरवरुह्य यजमानाय माध्याह्निकं व्रतं प्रदाय आपराह्निकीभ्यां प्रवर्ग्योपसद्भ्यां प्रचर्य विरमेत् । रात्रौ यजमानव्रतदानादि यथावत् । अथ श्वोभूते षष्ठ्या उपसदो दिने (आदितो नवमे दिवसे) प्रातः पौर्वाह्णिकीभ्यां प्रवर्ग्योपसद्भ्यां प्रचर्य, अवशिष्टां पञ्चमीं चितिमुपधाय, तदानीमेव आपराह्निकीभ्यां प्रवर्ग्योपसद्भ्यां प्रचर्य सुब्रह्मण्याह्वानान्तं कृत्वा, चितं स्थण्डिलमभिमृश्य, आज्येन हिरण्यशकलसहस्रेण च तत् प्रतिदिशं प्रोक्षेत् ॥

## शतरुद्रीयहोमः

ततः चितेरुत्तरस्य पक्षस्य वायव्यकोणस्थिताया इष्टकाया उपरि अजाक्षीरेण मृगीक्षीरेण वा अर्कपत्रेण अध्वर्युर्जुहुयात् । तस्या इष्टकायाः समीपे लौकिकीभिरिष्टकाभिः पीठं कृत्वा तदुपर्यध्वर्युस्तिष्ठन् शतरुद्रीयं (रुद्राध्यायं) पठन् अविच्छिन्नया धारया जुहुयात्[1] । यथा धाराया विच्छेदो न भवति तथा अन्योऽजाक्षीरमर्कपर्णे स्रावयेत् । शतरुद्रीयस्य तृतीयांशपाठं यावत् अर्कपर्णं जानुदघ्ने धारयेत् । उपरितनतृतीयांशं यावत् नाभिदघ्ने, अन्तिमांशं यावदास्यदघ्ने धारयन् जुहुयात् । सर्वत्र रुद्रा एव देवताः । ततस्तमर्कपर्णं यत्र पशवो न सञ्चरेयुस्तस्मिन् देशे निरस्येत् । ततो यजमानश्चतसृष्वपि दिक्षु रुद्रमुपतिष्ठते । अनन्तरमध्वर्युरुदकुम्भमादाय स्थण्डिलं त्रिः परिषिञ्चेत् । ततो दीर्घस्य वंशस्याग्रभागे वेतसशाखाम्, अवकां (शैवालं), मण्डूकं च सहैव बद्ध्वा चितेरुपरि विकर्षेत् । ततः पृष्ठाख्यैः सामभिरध्वर्युः यजमानः प्रस्तोता वा चितिमुपतिष्ठेत । एतदन्तं चयनकर्म ॥

## चितेरुपर्यग्निस्थापनादि

ततः प्रवर्ग्यमुद्वास्य शालामुखीयेऽग्नौ (प्रकृताहवनीये) कांश्चन होमान् हुत्वा अध्वर्युः चितिमारुह्य उत्तरवेदिवत् [2]व्याघारणादिकं कृत्वा, दध्ना मधुमिश्रितेन, आज्येन वा चितिं प्रोक्ष्य यजमानेन सहावरुह्य,

---

१. नात्र होमार्थमग्निस्थापनादिकम् । इष्टकाया उपर्येव धारया क्षीरस्य प्रस्रावणम् ।

२. व्याघारणं घृतस्य क्षारणम् ।

कृष्णमृगचर्मनिर्मिते उपानहावुभे अप्युन्मुच्य, अध्वर्युः वैश्वकर्मणसंज्ञकाः षोडश आहुतीर्हुत्वा औदुम्बरीस्तिस्रः समिधो घृताक्ता आहवनीय आधाय पशुबन्धवदग्निं प्रणयति । तच्चैवम्—आहवनीये काष्ठान्याधाय ततो ज्वलन्तमग्निं क्वचित् पात्रे गृहीत्वा सिकताभिरुपयम्य, आग्नीध्रीयं यावद्गत्वा, कंचन श्वेतवर्णमश्मानमाग्नीध्रीये निधाय, ततः चितेः पुच्छसमीपं गत्वा हस्तस्थितमग्निं प्रतिप्रस्थातृहस्ते दत्त्वा, स्वयमध्वर्युश्चितिमारुह्य स्वयमातृण्णाख्याया[1] इष्टकाया उपरि पांशुकान्[2] सम्भारान् न्युप्य, तदुपर्यग्निं प्रतिप्रस्थातृहस्तात् गृहीतं प्रतिष्ठापयेत् । अतः परमयमेव चित्योऽग्निराहवनीयो भवति । यतोऽयं प्रणीतः स गार्हपत्यः । पुराणगार्हपत्यः प्राजिहितसंज्ञकः । ततस्तत्रैव अग्नावाहवनीये कांश्चन होमान् पूर्णाहुतिं च हुत्वा, ततो वैश्वानरेष्टिमुपक्रम्य तदनुष्ठानमध्ये तद्धर्मैः साकं सप्तभ्यो मरुद्गणेभ्यो हविर्निर्वापादिकं कृत्वा वैश्वानरयागानन्तरं सप्तानां मरुद्गणानां यागान् कृत्वा तदीयं तन्त्रं परिसमाप्य, ततो वसोर्धारां जुहुयात् ॥

## वसोर्धाराहोमः, यजमानाभिषेकश्च

तदित्थम्—उदुम्बरवृक्षनिर्मितां हस्तचतुष्टयदैर्घ्याम्, अल्पदण्डां पश्चिमभागे गर्तवतीं दीर्घबिलां जुहूं निर्माय, तामधस्तात् आर्द्रया मृदा विलिप्य घृतेन पूरयित्वा तेन तस्मिन्नग्नौ जुहुयात्; यथा आरम्भप्रभृति समाप्तिपर्यन्तं मध्ये धारा न विच्छिद्येत तथा अन्यः कश्चित् जुह्वां घृतं पूरयंस्तिष्ठेत् । अवसितायां वसोर्धारायां जुह्वां यदाज्यमवशिष्यते तस्मिन्नन्नं पक्त्वा (लौकिकेऽग्नौ पाकः) तेन अध्वर्युब्रह्मोद्गातृहोतॄन् महर्त्विजो भोजयित्वा भुक्तवद्भ्यस्तेभ्यः चतस्रो धेनूर्वरत्वेन दत्त्वा सप्तभिर्ग्राम्याभिः सप्तभिश्च आरण्याभिः पूर्वोक्ताभिरोषधिभिर्यवागूः पृथक् पक्त्वा ताभिः पृथक् पृथग्घुत्वा हुतशिष्टानां यवागूनामंशं पात्रान्तरे किञ्चित् किञ्चिदिव अवस्राव्य, चितेः दक्षिणपक्षसमीपे औदुम्बरीमासन्दीं प्रतिष्ठाप्य, तदुपरि कृष्णाजिनमास्तीर्य, तत्र यजमानमुपवेश्य तं तेन यवागूशेषेण अभिषिञ्चेत् । ततो राष्ट्रभृद्धोमान् अन्यांश्च कांश्चन होमान् हुत्वा सौमिकं कर्म आरभेत ।

---

१. पुरुषैर्न कृतम्, किं तु स्वयमेव यत्र च्छिद्रमुत्पन्नं सा स्वयमातृण्णा ।
२. पशुयागेऽग्न्यायतने प्रक्षेप्तव्यतया श्रुताः सम्भाराः पांशुकाः ।

तत उपरवाख्यान् चतुरोऽवटान् दक्षिणहविर्धानमण्डपस्य पश्चिमभागे उपरिभिन्नानन्तःसम्भिन्नान् अग्निष्टोमवदेव खात्वा ततो धिष्ण्यांश्चिनुयात् ॥

## धिष्ण्योपधानम्

तत्र आग्नीध्रीये धिष्ण्येऽष्टाविष्टकाः अश्मना पूर्वनिक्षिप्तेन सह नव, द्वादश होत्रीये धिष्ण्ये, एकादश ब्राह्मणाच्छंसीये, षण्मार्जालीये, अन्येषु प्रशास्त्रीयनेष्ट्रीयाच्छावाकीयपोत्रीयेषु धिष्ण्येषु अष्टावष्टौ चोपदध्यात् । एवं ब्रह्मसदनेऽष्टौ । चात्वालशामित्र-अवभृथस्थानेष्वप्यष्टावष्टावुपधाय सर्वेषां पुरीषेण (मृदा) आच्छादनं कुर्यात् । तत अग्नीषोमीयपशुयागतन्त्र-मारभेत ॥

## देवसुवां हवींषि

ततोऽग्नीषोमीयवपायागानन्तरं तदीयपशुपुरोडाशकाले अष्टौ देव-सुवां हवींषि निर्वपेत् । तानि च—अग्नये गृहपतये पुरोडाशार्थं कृष्णाः व्रीहयः । सोमाय वनस्पतये चर्वर्थाः श्यामाकाः । सवित्रे सत्यप्रसवाय आशवो व्रीहयः । रुद्राय पशुपतये चर्वर्थाः गवीधुकाः । बृहस्पतये वाचस्पतये चर्वर्था नीवाराः । इन्द्राय ज्येष्ठाय पुरोडाशार्था व्रीहयः । मित्राय सत्याय चर्वर्थाः आम्बा व्रीहयः । वरुणाय धर्मपतये चर्वर्था यवा इति । तानि पशुपुरोडाशेनैव सह अनुष्ठाय वसतीवरीग्रहणादिकं कृत्वा पशुयागं समाप्य, रात्रौ यजमानस्य व्रतदानादिकं कृत्वा विरमेत् ॥

## सौमिकव्यापारः

ततः प्रकृतिवत् महारात्रे प्रबुध्य सौमिकव्यापारमारभेत । तत्र यदा होता प्रातरनुवाकशस्त्रमारभेत ततः पूर्वमेव अध्वर्युः कैश्चिन्मन्त्रै-रग्नियोगं कुर्यात् । ततो होता प्रातरनुवाकं यथावत् पठेत् । सौमिक-व्यापारांश्च क्रमशः कुर्वन् यत्संस्थाकं क्रतुमनुष्ठातुमिच्छति यजमानः, तदनुसारेण कर्माण्यध्वर्युः कुर्वीत । ततोऽवभृथेष्टिमवभृथस्नानान्ताम्, अनूबन्ध्यास्थानिकीमाहुतिं च कृत्वा पूर्वकृताग्निविमोकं कृत्वा दश आकूतिहोमान् हुत्वा कर्म अवशिष्टं समापयेत् । ततो यजमानोऽग्निमारोप्य-संज्ञकैर्मन्त्रैरुपस्थाय प्राजिहितमग्निमरण्योः समारोप्य, गृहं गत्वोदवसानी-यादिकं यथोक्तमनुतिष्ठेत् । आगामिनि पर्वणि सौत्रामण्याख्येन पशुयागेन यजेत । ततोऽपरेद्युर्मैत्रावरुण्या चामिक्षया । एतावता समाप्तमग्नि-

चयनम् । परिसमाप्ते यज्ञे यजमानो नियमानिमान् धारयेत्—संवत्सरं यावत् गुरोरपि प्रत्युत्थानं न कर्तव्यम्। सत्यां वृष्टौ न धावेत्। तृतीयचयनं कृत्वा न स्त्रियमुपेयात् इत्येव । अन्ये च सोमसुतो नियमा भवन्त्येव ॥

## सौत्रामणीयागः

सौत्रामणी नाम पशुयागः । स द्विविधः प्रोक्तस्तैत्तिरीये बौधायनापस्तम्बादिभिश्च—चरकसौत्रामणी कौकिलसौत्रामणी चेति । तत्र चरकसौत्रामणी स्वतन्त्रा, चयनाङ्गभूता च । अस्यां त्रयः पशवः—अजो धूम्रवर्णोऽश्विदेवताकः । मेषः सरस्वतीदेवताकः । मेष एव चेन्द्रदेवताकः । निरूढपशुबन्धकल्पेन त्रयाणां सहैव अनुष्ठानम् । अत्र वपायागानन्तरं सुराग्रहग्रहणं यद्यपि ब्राह्मणश्रौतसूत्रादावुक्तं तथापि तस्य कलौ निषिद्धत्वात् तद्विकल्पतया आपस्तम्बादिभिः पयोग्रहाणां विधानात् तैरेव यागोऽनुष्ठीयते । तत्र त्रयो ग्रहाः । पशुयागीया देवता एव अत्रापि देवताः । तैर्हुत्वा पितॄनुपस्थाय पशुपुरोडाशयागमनुतिष्ठेत् । त्रयः पुरोडाशाः । इन्द्रः, सविता, वरुण इति क्रमेण तत्र देवताः । ततोऽङ्गयागाद्यनुष्ठानपूर्वकं सौत्रामणीं समाप्य, वारुणैनैककपालेन अवभृथेष्टिं कृत्वा स्नात्वा अग्नीन् समारोप्य गृहमागच्छेत् । इयं चरकसौत्रामणी । कौकिलसौत्रामण्याम्—ऐन्द्रः, आश्विनः, सारस्वतः, ऐन्द्रः, ऐन्द्रो वायोधसश्चेति पञ्च पशव इतीयान् विशेषः । इति सौत्रामणीस्वरूपम् ॥

## राजसूयः

अतः परं राजसूयाख्यं क्रतुं निरूपयामः । क्रतुरयं राज्येऽभिषिक्तेन राज्यधुरं वहता क्षत्रियेणाऽनुष्ठेयः । अयं च प्राचीनसमये तादृशैरेव राजभिः विशेषतः सूर्यवंशीयैः सोमवंशीयैश्चाऽनुष्ठित इति ज्ञायते । महाभारते च युधिष्ठिरेणानुष्ठितो राजसूययागस्साधु वर्णितोऽस्ति । तदनन्तरकालिकाश्च राजानो तं बहवोऽन्वतिष्ठन्निति पुराणेभ्यः शिलालेखादिभ्यश्च प्रमाणेभ्योऽवगच्छामो वयम् । अयं च बह्वीनामिष्टीनां द्वयोः पशुयागयोः सप्तानां दर्विहोमानां षण्णां च सोमयागानां समुदायरूपः ।

---

१. आप. श्रौ. सू. १८-८-१., कात्या. श्रौ. सू. १५-१-१. राजा सूयते अभिषूयते सोमो यागार्थमत्रेति व्युत्पत्ती राजसूयशब्दस्य ।

अतोऽत्र इष्टिपशुसोमयागानां समप्राधान्यमेव; नेतरेतराङ्गभावः। पशुयागाङ्गभूता इष्टयः, सोमयागाङ्गभूता इष्टयः, पशुयागाश्च प्रकृतितोऽतिदेशप्राप्ता यथावदनुष्ठेया एव। तेषां परं तत्तदङ्गत्वमप्रतिहतं वर्तत एव॥

किञ्चिदधिकैकवत्सरसाध्योऽयं क्रतुः। अत्र षट् सोमयागाः, द्वौ पशुयागौ। एकोनत्रिंशदुत्तरशतमिष्टयः (१२९) सप्त दर्वीहोमाश्चानुष्ठेयाः। यज्ञस्याऽस्य फाल्गुनशुक्लप्रतिपदि आरम्भः कर्तव्यः। ततो वर्षमेकं चातुर्मास्यानुष्ठानम्। तानि चातुर्मास्यनिरूपणप्रकरणोक्तरीत्याऽनुष्ठेयानि। ततः पवित्रादीनां षण्णां सोमयागानां क्रमेणानुष्ठानम्। अत्र यागशिष्टस्य सोमस्य भक्षणे विकल्पः। अवश्यं स भक्षयितव्य एवेति यो नियमो ब्राह्मणस्य सोऽस्य नास्ति। यदि तु सोमभक्षणेच्छा, तदा पूर्वं यागार्थं सोमक्रयणकाल एव न्यग्रोधवृक्षस्यावरोधान्[1] तदङ्कुराणि वा सोमवदेव क्रीत्वा सर्वांश्च सौमिकव्यापारान् तत्राऽनुष्ठाय, ततस्तानि पिष्ट्वा दध्ना सम्मेल्य, तेन यजमानचमसमापूर्य होमकाले इतरैः सोमचमसैः सह हुत्वा होमावशिष्टं तमेव न्यग्रोधावरोधरसं[2] राजानं यजमानं पाययेत्। अध्वर्य्वादयस्तु ऋत्विजः स्वस्वग्रहचमसस्थं सोमरसमेव भक्षयेयुः। यजमानस्य तु राज्ञो ग्रहेषु भक्षणं नास्ति। एवं सर्वेष्वपि सोमयज्ञेषु राज्ञो भक्षणं फलचमसस्यैव, न सोमस्य। राजन्यकर्तृकेऽपि यागेऽस्मिन् ब्राह्मणा एवर्त्विजः। तेषां तु सोमभक्षणं भवत्येव। इति सामान्यविषयाः। विशेषास्तु—चैत्र्याः पौर्णमास्याः पूर्वस्मिन् दिवसे पवित्राख्यसोमयागार्थं दीक्षां कुर्वीत। दिनत्रये दीक्षाः। दिनत्रये चोपसदः। सप्तमदिने सुत्या। अग्निष्टोमसंस्थाकोऽयं क्रतुः। सहस्रमत्र गावो दक्षिणाः सप्तसु दिवसेषु क्रतुमिमं परिसमाप्य, अष्टमदिनप्रभृति अनुमत्यादीनष्टौ यागान् एकैकस्मिन् दिने एकैकरूपेण अनुतिष्ठेत्॥

ते च यथा—१. अनुमत्यै पुरोडाशोऽष्टाकपालः २. आदित्यश्चरुः ३. आग्नावैष्णव एकादशकपालः ४. अग्नीषोमीय एकादशकपालः ५. ऐन्द्र एकादशकपालः ६. आग्नेयोऽष्टाकपालः ऐन्द्रं दधि

१. न्यग्रोधस्य वटवृक्षस्य अवरोधाः शाखाभ्योऽवाङ्मुखतया प्ररोहन्तो मूलविशेषाः।

२. See. ऐ. ब्रा, Ch. 13.

